॥ घपादः ॥

अघौषधे मघा ऋक्षे श्लाघा त्विच्छाप्रशंसयोः ।
मेघौ मुस्तकजीमूतावर्घौ पूजाप्रतिक्रयौ ॥

प्रतिघौ रुट्प्रतीघातावनघोऽपापहृद्ययोः ।
अनर्घोऽमूल्येऽपूज्ये स्यादुल्लाघो निर्गदे शुचौ ॥

॥ घार्धश्लोकः ॥

**ओघो** वृन्दे पयोवेगे वाद्यभेदः परम्परा ।
**अङ्घ्रिः** स्याज्जन्तुचरणे मूले चापि महीरुहाम् ॥

**अघमंहसि** दुःखे च व्यसनेऽप्यघमुच्यते ।
**लघुः** शोभननिःसारशीघ्रपृक्का [ गुरुष्वपि ? ] ॥

**निदाघः** कथितो ग्रीष्मे उष्णस्वेदाम्भसोरपि ।
**परिघो** रवीन्दुयोगे स्याद्घाते शस्त्राकुले त्रिषु ॥

---

353 त्विछाविशेषयोः *for* त्विच्छाप्रशंसयोः.

354 °जिमूताव्यघौ *for* जीमूतावर्घौ

355 रुट° *for* रुट्°.

356 निर्दितःसु च *for* निर्गदे शुचौ.

357 घार्धः *for* घार्धश्लोकः.

358 दयोवेगे ( *before corr.* ) *for* पयोवेगे; वाद्यभेद *for* वाद्यभेदः; परस्परा *far* परम्परा.

359 अंघ्रि *for* अङ्घ्रिः.

360 व्यसनेपि *for* व्यसनेऽपि.

361 °विस्मार° *for* °निःसार°; पूक्का *for* पृक्का.

363 परीघो *for* परिघो; रविन्दुयोगे *for* रवीन्दुयोगे; स्यात् घातः *for* स्याद्घाते.

**अमोघ** सफलं ज्ञेय**ममोघा** पाटला तरुः ।
**सर्वौघो** गुरुवेगार्थः सर्वसन्नहनार्थकः ॥

॥ इति घान्तवर्गः ॥

॥ चपादः ॥

**न्यङ्** निकृष्टे तथा कार्त्स्न्ये **वीचिः** कल्लोलस्वल्पयोः ।
**अर्चा** स्यात्प्रतिमा पूजा **क्रौञ्चा** द्वीपाद्रिपक्षिषु ॥

**नीचः** पृथग्जने निम्ने **पिचुः** स्यात्तूलकर्षयोः ।
**मरीचिः** स्यान्मनौ रश्मौ **नमुची** दैत्यमन्मथौ ॥

**अवीची** नरकानूर्मी **सम्यक्** संगतहृद्ययोः ।
॥ चार्धश्लोकः ॥

**त्वक्त्वचाचोच**शब्दाः स्युः वल्के चर्मणि पत्रके ।
**रुग्रु**चावपि रश्मिः याच्छोभाभिलाषयो **रुचा** ॥

---

364 अमाघं *for* अमोघं; फलं ( *before corr.* ) *for* सफलं.
366 घान्तः *for* इति घान्तवर्गः.
368 कार्त्ने *for* कार्त्स्न्ये; वाचिः *for* वीचिः ; °शल्ययोः *for* स्वल्पयोः.
369 आर्चा *for* अर्चा; क्रौश्चा *for* क्रौञ्चा; द्विपाद्रि° *for* द्वीपाद्रि °.
370 निचे *for* निम्ने; स्याहूल° *for* स्यात्तूल°.
371 मरिचीः ( *before corr.* ) *for* मरीचिः; देत्य° *for* दैत्य°.
372 नरकात्यूर्म्मी *for* नरकानूर्मी.
373 चार्धः *for* चार्धश्लोकः.
374 त्वचंत्वचाचौचशब्दाः ( *before corr.* ) *for* त्वक्त्वचाचोच्चशब्दाः; वल्कः ( *before corr.* ) *for* वल्के.
375 रुगुचावपि *for* रुग्रुचावपि; रश्मि *for* रश्मिः; स्यात् शोभा *for* स्याच्छोभा; 'विनाशयो° *for* °भिलाषयो°

रुचिर्दीतौ च शोभायामभिष्वङ्गाभिलाषयोः ।

कचः केशे च विख्यातो ह्रीबेरसुरसुतयोः ॥

चञ्चुस्त्रोट्यां तथैवाण्डे गोनाडी चैव कीर्तितः ।

मोचः शोभाञ्जने प्रोक्तः शाल्म [ 18 ] ली कदली तथा ॥

चञ्चो नलादिनिर्माणे चञ्चा तु तृणपूरुषः ।

काचः शिक्येऽक्षिरोगे च मृत्प्रभेदे च कथ्यते ॥

चर्चा देवीविशेषः स्याच्चर्चालेपनचिन्तयोः ।

कूर्चः शीर्षे च दम्भे च भ्रूमध्ये कूर्चमिष्यते ॥

विकचः स्फुटितेऽकेशे विकचोऽचरमग्रहः ।

क्रकचः करपत्रे स्याद्ग्रन्थिलाख्यो द्रुमस्तथा ॥

नाराचा लौहबाणा स्यु [ र्नाराचो जलहस्तिनि ? ] ।

संकोचं कुङ्कुमं प्रोक्तं संकोचो मीनबन्धयोः ॥

---

376 रुचिदितौ *for* रुचिर्दीतौ; अभिष्वांगा° *for* अभिष्वङ्गा°; °भिलासयोः *for* °भिलाषयोः.

377 वेर° *for* ह्रीबेर°.

378 चुंचुः *for* चञ्चुः ; तथैवंडे *for* तथैवाण्डे; कीत्तितः *for* कीर्तितः.

379 शाल्मकी *for* शाल्मली.

380 चञ्चौ *for* चञ्चो; नलादिनिर्म्माणे *for* नलादिनिर्माणे; चश्चा *for* चञ्चा.

381 शिक्येक्षिरोग *for* शिक्येऽक्षिरोगे; मृतप्रभेदे *for* मृत्प्रभेदे.

382 स्यात चर्चा *for* स्याच्चर्चा; आलेपण° *for* आलेपन°.

383 कूर्च्चः *for* कूर्चः ; शिर्षे *for* शीर्षे; दन्ते *for* दम्भे; भ्रूमध्ये *for* भ्रूमध्ये; कूर्च्चम् *for* कूर्चम्.

384 स्फटितेकेशे *for* स्फुटितेऽकेशे; विकचोत्तरमग्रहः *for* विकचोऽचरमग्रहः.

385 परपंत्रे *for* करपत्रे; स्यात् *for* स्याद्.

386 लोहबाणाः *for* लौहबाणाः.

387 मिनबंधयोः *for* मीनबन्धयोः.

**प्रपञ्चो** विस्तरे ख्यातः **प्रपञ्चश्च** प्रतारणम् ।
**मारीची** देवता काचिन्**मारीचो** राक्षसान्तरम् ॥

॥ चश्लोकः ॥

**शुचिरग्नौ** सिते ग्रीष्मे शुद्धेऽनुपहतेऽपि च ।
उपधाशुद्धसचिवे शृङ्गाराषाढयोरपि ॥

**सूची** सीवनवस्तु स्यात्**सूची** त्वभिनये व्यये ।
**सूची** च करणे प्रोक्ता रतताण्डवशीलिनाम् ॥

**प्रागुदक्प्रत्यगि**त्येते दिग्देशे कालतोऽव्ययम् ।
प्राच्योदीच्यप्रतीच्यानां वाचकं स्यादनव्ययम् ॥

**मलिम्लुचो**ऽग्निरुद्दिष्टश्चौरश्चापि **मलिम्लुचः** ।
अमावास्याद्वयं यत्र मासः सोऽपि **मलिम्लुचः** ॥

[॥ इति चान्तवर्गः ॥]

~~~~~~~~~~

388 विस्तरो *or* विस्तरे.
389 मरीचो ( *before corr.* ) मारीची.
390 चश्लोकाः *for* चश्लोकः .
391 मिते *for* सिते; अनुपहतेपि *for* अनुपहतेऽपि.
392 अपी *for* अपि.
393 शुचिः *for* सूची; सिवनवस्तु *for* सीवनवस्तु; स्या *for* स्यात्; सुचित्य-भिनये *for* सूची त्वभिनये.
395 °उदक° *for* °उदक्°; दिग्देश *for* दिग्देशे; कालतोव्ययं *for* काल्तोऽव्ययं.
396 प्राच्योदिच्यप्रतिच्यानां *for* प्राच्योदीच्यप्रतीच्यानां.
397 मलीम्लुचो *for* मलिम्लुचो; उदिष्टः *for* उद्दिष्टः .
398 शोपि *for* सोऽपि.
399 *add.* इति चान्तवर्गः.
~~~~~~~~~~

॥ छार्धश्लोकः ॥

कच्छो नदीतटे कच्छो नौकाङ्गे परिधानके ।
गुच्छश्च स्तबके स्तम्बे हारभेदे च दृश्यते ॥

पिच्छा च शाल्मलीवेष्टे पङ्क्तौ पिच्छं तु तुच्छके ।
म्लेच्छो मारणजातीयभेदे पापरतेऽपि च ॥

अच्छौ निर्मलभल्लूकावाभिमुख्ये चाच्छाऽव्ययम् ।
पुच्छः पश्चात्प्रदेशः स्यात्पुच्छो लाङ्गुल इष्यते ॥

॥ इति छान्तवर्गः ॥

॥ जपादः ॥

**आजिः** समावनौ युद्धे **प्रजा** संता[ *19* ]नलोकयोः ।
**रुजा** भङ्गे च रोगे च **निजमा**त्मीयनित्ययोः ॥

---

400 छार्धोदा *for* छार्धश्लोकः.

401 कछो *for* कच्छो; कच्छे *for* कच्छो; नौकागे *for* नौकाङ्गे.

402 गुछश्च *for* गुच्छश्च; सुस्तके *for* स्तबके; स्तम्वे *for* स्तम्बे.

403 पिछा *for* पिच्छा; पंकौ *for* पङ्क्तौ; पिछं *for* पिच्छं; तुछके *for* तुच्छके.

404 म्लेछो *for* म्लेच्छो; मारणजातिय° *for* मारणजातीय°; पापरतेपि *for* पापरतेऽपि.

405 अछो *for* अच्छौ; निर्म्मल° *for* निर्मल°; °भल्लुको *for* °भल्लूकौ; अभिमुख्ये *for* आभिमुख्ये; चाछाचाऽययं *for* चाच्छाव्ययं.

406 पुछः *for* पुच्छः; पश्चाप्रदेशः *for* पश्चात्प्रदेशः; स्या *for* स्यात्; पुछो *for* पुच्छो; ईष्यते *for* इष्यते.

407 छान्ताः˝ *for* इति छान्तवर्गः.

409 समावस्मो *for* समावनौ.

410 रोगे च रोच *for* रोगे च; निज आत्मीय° *for* निजमात्मीय°.

**व्रजा** गोष्ठाध्वसंघाता **न्युब्जो**ऽधोमुखकुब्जयोः ।
**भुजः** पाणौ च बाहौ च **गिरिजो** व्याधिवृक्षयोः ॥

**सामजौ** गजसामोत्था**वहिभुक्के**कितार्क्ष्ययोः ।
**द्विजराजो** विधुस्तार्क्ष्यौ **ग्रहराजो** रविः शशी ॥

॥ जार्धश्लोकः ॥

**द्विजो** विप्रेऽण्डजे दन्ते हरेणुपुष्पयो**र्द्विजा** ।
**अजा** हरिहरब्रह्मच्छागा रघुसुतोऽप्य**जः** ॥

**ध्वजः** शेफसि चिह्ने च पताकायां च शौण्डिके ।
**वाजं** पाथे मुनौ **वाजो वाजो** निस्वनपक्षयोः ॥

**ऊर्जो** बले तथोत्साहे **ऊर्जो** मासश्च कार्तिकः ।
**बीजं** रेतसि हेतौ च **बीजम**ङ्कुरकारणम् ॥

**गुञ्जा** तु वाद्यभाण्डं स्यात्काकचिञ्च्यां कलध्वनौ ।
**गञ्जो** रीढा भाण्डागारे **गञ्जा** खन्यां सुरागृहे ॥

~~~~~~~~~~

411 गोष्ट° *for* गोष्ठ°; न्युब्जो *for* न्युब्जो; °कुब्जयोः *for* °कुब्जयोः.
412 वाहौ *for* बाहौ.
415 जार्द्धोदा *for* जार्धश्लोकः.
416 विप्रांडजे *for* विप्रेऽण्डजे;° पुष्पयोःर्द्विजः *for* पुष्पयोर्द्विजा.
417 हवि° ( *before corr.* ) हरि°; रघुसुतोप्यजः *for* रघुसुतोऽप्यजः
418 सेफसि *for* शेफसि; पताकायाश्च *for* पताकायां च.
419 राजं *for* वाजं; पात्रे *for* पाथे; राजो *for* वाजो; राजो *for* वाजो; लिखन° *for* निस्वन°.
420 वने *for* बले; तथोत्साहो *for* तथोत्साहे; कार्त्तिकः *for* कार्तिकः.
421 वीजं *for* बीजं; होवौ ( *before corr.* ) हेतौ; वीरं *for* बीजं.
423 वीढा *for* रीढा; ख्यल्यां *for* खन्यां.
~~~~~~~~~~

कुञ्जः स्यात्करिणां दन्ते हनौ कुञ्जः सुगन्धके ।
अब्जो धन्वन्तरौ चन्द्रे स्यादब्जं शङ्खपद्मयोः ॥

वणिक्करणभेदे स्याद्वाणिज्ये तत्करेऽपि च ।
करञ्जश्च करञ्जे स्यान्नखे व्याघ्रनखेऽपि च ॥

सहजः सहजाते स्यान्निसर्गः सहजः स्मृतः ।
काम्बोजाः कम्बोजभवाः काम्बोजी मासपर्णिका ॥

अङ्गजो मन्मथे पुत्रे अङ्गजं शोणितं विदुः ।
अण्डजाः कृकलासादिसर्पमीनखगादिकाः ॥

यक्षराजः कुबेरः स्यान्मल्लानां रङ्गचत्वरे ।
धर्मराड् धर्मराजाख्यो यमबुद्धयुधिष्ठिराः ॥

शरीरजो गदोऽनङ्गः पुत्रश्चापि शरीरजः ।
भरद्वाजः स्मृतो धीरो मुनिपक्षिविशेष [ 20 ] योः ॥

भृङ्गराजस्तु विज्ञेय औषधीयज्ञभेदयोः ।
भारद्वाजो मुनौ द्रोणे कार्पासे च प्रयुज्यते ॥

---

*424* हलौ *for* हनौ.
*425* अव्जो *for* अब्जो; अव्जं *for* अब्जं.
*426* वानिज्ये *for* वाणिज्ये; तत्करेपि *for* तत्करेऽपि.
*427* स्यात् *for* स्यान्; व्याघ्रनखेपि *for* व्याघ्रनखेऽपि.
*428* महजः *for* सहजः; स्याद्विसर्गः *for* स्यान्निसर्गः.
*429* कांवोजाः *for* काम्बोजाः; कंवोज° *for* कम्बोज°; कंवोजी *for* काम्बोजी.
*430* शोशोणितं *for* शोणितं.
*431* °खगादिका *for* °खगादिकाः.
*432* कुवेरः *for* कुबेरः; एवहुगचत्वरे *for* रङ्गचत्वरे.
*433* धर्म्मराड *for* धर्मराड्; धर्म्मराजाख्यो *for* धर्मराजाख्यो; °बुद्ध° *for* °बुद्ध°.
*436* भृगराजः *for* भृङ्गराजः.
*437* भारद्वाज *for* भारद्वाजो.

॥ जश्लोकः ॥

**गिरिजा** पार्वती ख्याता **गिरिजं** च सुगन्धिकम् ।
**गिरिजं** चाभ्रकं प्रोक्तं **गिरिजं** च शिलाजतु ॥

**वलजं** गोपुरे क्षेत्रे सस्ये **वलजा**मिष्यते ।
**वलजा** च मही प्रोक्ता **वलजा** विधुदर्शना ॥

॥ इति जान्तवर्गः ॥

॥ झार्धश्लोकः ॥

**झञ्झा** ध्वनिविशेषः स्याद् **झञ्झा**णुजलवर्षणम् ।

॥ इति झान्तवर्गः ॥

॥ ञपादः ॥

**सर्वज्ञः** शंकरे बुद्धे **क्षेत्रज्ञः** शिक्षितात्मनोः ।

॥ आर्धश्लोकः ॥

**ज्ञः** स्याद्ब्रह्मणि सौम्ये च पण्डिते च महीसुते ।

---

440 शिलाजतुः *for* शिलाजतु.
441 *drop* च *after* वलजं; गोपुरेन्देत्रे *for* गोपुरे क्षेत्रे; वजलं *for* वलजं.
442 वंधुदर्शना *for* विधुदर्शना.
443 जान्ताः *for* इति जान्तवर्गः.
444 झार्धः *for* झार्धश्लोकः.
445 स्यात् *for* स्याद्; झंझातु° *for* झञ्झाणु°.
446 झान्ता *for* इति झान्तवर्गः.
447 ञपादाः *for* ञपादः.
448 बुद्धे *for* बुद्धे; क्षेमज्ञः *for* क्षेत्रज्ञः.
449 आर्धः *for* आर्धश्लोकः.
450 ब्रह्मणि *for* ब्रह्मणि.

॥ ञश्लोकः ॥

प्रज्ञा मतिस्तद्युक्ता च प्रज्ञः पण्डित इष्यते ।
प्रज्ञः स्यात्प्रज्ञुना सार्धं ख्यातः प्रगतजानुके ॥

संज्ञा स्याच्चेतनानाम्नोर्हस्ताद्यैश्चार्थसूचने ।
संज्ञा सूर्यप्रिया ख्याता स्याच्छायेति प्रकीर्तिता ॥

॥ इति ञान्तवर्गः ॥

॥ टपादः ॥

व्युष्टिः फले समृद्धौ च क्लिष्टिः स्यात्क्लेशसेवयोः ।
सृष्टिः स्वभावे निर्माणे दृष्टिर्धीदर्शनाक्षिषु ॥

पुष्टिः स्यात्पोषणे वृद्धौ दिष्टिरानन्दमानयोः ।
मुष्टिर्वद्धकरे माने रिष्टिः समृद्धिखड्गयोः ॥

म्लिष्टं म्लानेऽस्पष्टवचे रिष्टं स्यादशुभं शुभम् ।
दिष्टं दैवे च काले च कष्टं गहनकृच्छ्रयोः ॥

452 प्राज्ञा ( *before corr.* ) *for* प्रज्ञा; प्राज्ञः ( *before corr.* ) *for* प्रज्ञः; ईष्यते *for* इष्यते.

453 प्राज्ञः ( *before corr.* ) *for* प्रज्ञः; सार्द्धं *for* सार्धं; प्रगल° ( *before corr.* ) *for* प्रगत°.

454 स्यात् *for* स्याच् ; °नाम्नो *for* °नाम्नोर्.

455 सुर्य्यप्रिया *for* सूर्यप्रिया; स्याछाएति *for* स्याच्छायेति; प्रकीत्तिता *for* प्रकीर्तिता.

456 ञान्ता *for* इति ञान्तवर्गः.

458 सम्रिद्धौ *for* समृद्धौ.

460 पुष्टि *for* पुष्टिः; दृष्टिः *for* दिष्टिः.

461 वर्धकरे *for* बद्धकरे; विष्टिः *for* रिष्टिः समिद्धिड्गयोः *for* समृद्धिखड्गयोः.

462 श्लिष्टं *for* म्लिष्टं; स्वतं वने मूले *for* म्लानेऽस्पष्टवचे; विष्टं *for* रिष्टं.

463 °कृछ्रयोः *for* °कृच्छ्रयोः.

व्युष्टं फले प्रभाते स्यात्क्रुष्टं रोदनरावयोः ।
**लाटो** जनपदे वस्त्रे **फटा** च फणदन्तयोः ॥

**स्फुटो** व्यक्ते प्रफुल्ले च **कुटः** स्याद्घटवेश्मनोः ।
**भटो** जनान्तरे वीरे **पिटः** पेटे च वागुलौ ॥

**लटौ** प्रमादवाग्दोषौ **पटो** वस्त्रप्रियाल [21] योः ।
**उरोष्टः** प्रणवे क्षीरे **कूपीटमुदरे** जले ।
**अवटौ** खिलभूगर्तौ **पर्पटौ** पिष्टकौषधी ॥

॥ टार्धश्लोकः ॥

**हृष्टः** प्रहसिते प्रीते विस्मिते फुल्लरोमणि ।
**त्वष्टा** दिवौकसां शिल्पी **त्वष्टारौ** सूर्यवर्धकी ॥

**इष्टं** यज्ञेषु यद्दानं यागश्चाशंसितं च यत् ।
**सृष्टं** स्यान्निर्मिते मुक्ते भूरिनिश्चितयोरपि ॥

---

465 फलदंतयोः ( *before corr.* ), फणदम्भयोः ( *after corr.*) *for* फणदन्तयोः.

466 °वेस्मनोः *for* °वेश्मनोः.

467 वाग्गुणौ *for* वागुलौ.

468 लटो *for* लटौ; °वाल्मोषौ *for* °वाग्दोषौ; °पियालयोः *for* °प्रियालयोः.

469 क्षिरे *for* क्षीरे; जने *for* जले.

470 अवटो *for* अवटौ; खन° *for* खिल°; पर्पटो *for* पर्पटौ.

471 टार्द्धः *for* टार्धश्लोकः.

472 प्रतिहते *for* प्रहसिते.

473 सूर्य्य° *for* सूर्य°; °वर्द्धकी *for* °वर्धकी.

474 यागेश्चीयदानं *for* यागेषु यद्दानं; आसंसितं *for* आशंसितं.

475 शृष्टं *for* सृष्टं; निम्मिते *for* निर्मिते ; युक्ते *for* मुक्ते.

क्लिष्टं तु क्लिशिते ज्ञेयं विक्लिष्टार्थे वचस्यपि ।
अट्टं शुष्के च भक्ते च अट्टमत्यर्थगेहयोः ॥

कोटिरश्रौ प्रकर्षे च संख्याचापाग्रयोरपि ।
खेटः कफे ग्रामभेदे कुत्सिते चर्मनन्दके ॥

वाटो मार्गे वृतौ वाटो वृक्षे च गृहवास्तुनि । 480
त्रुटिः स्यात्संशये चाल्पे सूक्ष्मैलाकालमानयोः ॥

जटा लग्नकचे मूले मांसी च कर्करी जटा ।
वटी कपर्दके शुम्बे रक्तिकायां तरौ वटः ॥

घटी वस्त्रस्यावसरे ? परीक्षा सुतुला घटः ।
कटः श्रोणौ कलिञ्जे च गजगण्डे शवे त्रिणे ॥ 485

नटी सुगन्धीभेदे स्यान्नटौ शैलूषनर्तकौ ।
चट्टुः पिचिण्डे चाटौ च व्रतिनां पीठिका चट्टुः ॥

शृङ्गाटः स्याच्चतुर्मार्गः शृङ्गाटो जलकण्टकः ।
त्रिकूटं सिन्धुलवणे त्रिकूटः पर्वतान्तरम् ॥

---

476 क्लिष्टन्तु *for* क्लिष्टं तु.
477 अट्टं *for* अट्टं; शुल्के *for* शुष्के; अट्टं *for* अट्टं.
479 कफ *for* कफे; चर्म्ममंदके *for* चर्मनन्दके.
480 ग्रवास्तुनि *for* गृहवास्तुनि.
481 संसंये *for* संशये; सूक्ष्मेना° *for* सूक्ष्मैला°.
483 शुद्धे *for* शुम्बे; वत्तिकायां *for* रक्तिकायां.
485 शरे *for* शवे.
486 शैलव° *for* शैलूष°; °नर्त्तकौ *for* °नर्तकौ.
487 पिचिडे *for* पिचिण्डे.
488 स्याच्चतुर्म्मार्गः *for* स्याच्चतुर्मार्गः.
489 पिच्चटं *for* त्रिकूटं; त्रिकूटं *for* त्रिकूटः.

**कुरुण्टो** झिण्टिकाभेदः **कुरुण्टी** दारुपुत्रिका ।
**पर्कटी** कथिता प्लक्षे बालपूगफलेऽपि च ॥

**चिरन्ती** तु सुवासिन्यां द्वितीये वयसि स्त्रियाम् ।
**परीष्टिः** परिचर्या स्यात्**परीष्टि**श्च गवेषणा ॥

**वरटा** कथिता हंसी गन्धोली **वरटा** मता ।
**अवट्टः** कथिता घाटा **अवट्टः** कूपगर्तयोः ॥

**विकटो** वि [ 22 ] कराले स्याद्विशाले दन्तुरेऽपि च ।
**चिपिटः** खाद्यभेदे स्यात्तथा पिट्टिकविस्तृते ॥

**संसृष्टं** संगते विद्याच्छुद्धे च वसनादिना ।
**शिपिविष्टः** शिवे ख्यातो दुश्चर्मा खलतिस्तथा ॥

**प्रतिसृष्ट**श्च प्रहिते दत्तप्रख्यातयोरपि ।
**प्रतिकृष्टं** विदुर्गर्ह्यं द्विरावृत्या च कर्षितम् ॥

---

*490* झिटिका° *for* झिण्टिका°.
*491* वालपूगफलेपि *for* बालपूगफलेऽपि.
*492* चिरन्टि *for* चिरण्टी; द्वितीये चयसि *for* द्वितीये वयसि.
*495* कथिघाताटा *for* कथिता घाटा; °गर्त्तयोः *for* °गर्तयोः.
*496* दंतुरेपि *for* दन्तुरेऽपि.
*497* खाद्यभेदे *for* खाद्यभेदे; पिद्रिभुविस्मृतः *for* पिट्टिकविस्तृते.
*498* समृष्ठं *for* संसृष्टं; विद्याविद्याछुद्धे *for* विद्याच्छुद्धे; रसनादिना *for* वसनादिना.
*499* दुश्चर्म्मा *for* दुश्चर्मा; खनतिः *for* खलतिः.
*500* दन्त° *for* दत्त°.
*501* गर्भं *for* गर्ह्यं; द्विरावृक्षा *for* द्विरावृत्या.

परपुष्टः पिके प्रोक्तः परेण पोषितेऽपि च ।
करहाटश्चाब्जकन्दे मदनाख्ये तु पादपे ॥

॥ टश्लोकः ॥

कूटं लोहमये दम्भे निश्चलासत्ययोरपि ।
राशिमायाद्रिशृङ्गेषु सीरावयवयन्त्रयोः ॥

पटुरामयनिर्मुक्तः पटुश्चतुरतीक्ष्णयोः ।
पटुः पटोलपत्रे च छत्रायां लवणे पटुः ॥

कटुस्तीक्ष्णे सुगन्धे च अकार्ये मत्सरे रसे ।
कटुः कटुतरायां स्याद्दूषणेऽपि कटु स्मृतः ॥

पट्टः पेषणपाषाणे पीठे च वस्त्रबन्धने ।
पट्टी ललाटभूषायां पट्टी लाक्षाप्रसादनः ॥

घटो गजशिरः कूटे समाध्यन्तरकुम्भयोः ।
घटा स्याद्घटने हस्तिश्रेण्यां च परिकीर्तिता ॥

यष्टिर्हारलतायां स्याद्दारुशस्त्रविशेषयोः ।
यष्टिर्ब्राह्मणखट्वा च यष्टिश्च मधुपर्णिका ॥

---

502 पोषितेपि *for* पोषितेऽपि.

503 ⁰चारकंदे *for* ⁰श्चाब्जकन्दे; पादयो ( *before corr.* ) *for* पादपे.

506 सि᳚रावयव° *for* सीरावयव⁰

507 पदु: *for* पटुः; °निर्म्मुक्तः *for* निर्मुक्तः; °तीक्षयोः *for* °तीक्ष्णयोः.

508 लवणो *for* लवणे.

509 तीष्णो *for* तीक्ष्णे; शुगंधे *for* सुगन्धे.

510 स्यादुषणेपि *for* स्याद्दूषणेऽपि.

511 पट्टः *for* पट्टः ; वस्त्रवंधने *for* वस्त्रबन्धने.

512 पटो *for* पट्टी; लालाटभूषणे *for* ललाटभूषायां; पटी *for* पट्टी.

514 हस्ती *for* हस्ति⁰ ; परिकीर्त्तिता *for* परिकीर्तिता.

515 स्यादारु⁰ *for* स्याद्दारु⁰.

516 यष्टि *for* यष्टिर्; ब्राह्मण⁰ *for* ब्राह्मण⁰ ; ⁰खट्वाश्च *for* ⁰खट्वा च.

**अरिष्टं** सूतिकागारे लशुने च शुभेऽशुभे ।
तक्रेऽपि च तथा**रिष्टा** निम्बफेनिलवायसाः ॥

**मर्कटः** स्यादूर्णनाभे कपौ स्त्रीकरणेऽपि च ।
**मर्कटी** शूकशिम्बायां चक्राङ्ग्यां च करञ्जके ॥

**कर्कटः** करणे स्त्रीणां राशिभेदकुलीरयोः ।
उर्वारुः **कर्कटी** ज्ञेया **कर्कटी** शाल्मलीफले ॥

**कुक्कुट**स्ताम्रचूडः स्यात् [ 23 ] **कुक्कुटो**ऽग्निकणेऽपि च ।
उच्चटे जीर्णदन्ते च तालमध्ये च **कुक्कुटः** ॥

**करटो** दुर्दुरूढः स्यात्काकद्विरदगण्डयोः ।
**करट**श्च कुसुम्भे स्यात्**करटः** पल्लिसंज्ञकः ॥

॥ इति टान्तवर्गः ॥

॥ ठपादः ॥

**श्रेष्ठः** कुबेरवरयोः **कुष्ठं** व्याधिसुगन्धयोः ।
**गोष्ठं** व्रजः सभा **गोष्ठी शठो** धुस्तूरधूर्तयोः ॥

---

517 सूतकारागे *for* सूतिकागारे; लशुभे शुभे *for* लशुने च शुभेऽशुभे.

518 तक्रेपि *for* तक्रेऽपि; तथाविष्टा *for* तथारिष्टा; लिम्बफेलिन° *for* निम्बफेनिल°.

519 स्यादुर्नलभे *for* स्यादूर्णनाभे; स्त्रीकरणेपि *for* स्त्रीकरणेऽपि.

520 शूकशिंवायां *for* शूकशिम्बायां; तक्राभ्यां *for* चक्राङ्ग्यां.

523 तामुचूडः *for* ताम्रचूडः; स्या *for* स्यात्; कुक्कुटोग्निकणेपि *for* कुक्कुटोऽग्निकणेऽपि.

524 उच्चैजीर्णदंतेच *for* उच्चटे जीर्णदन्ते च.

525 दुर्द्धरूटः *for* दुर्दुरूढः.

526 कुशुभे *for* कुसुम्भे; स्यातत् *for* स्यात्.

527 टान्तवर्गः *for* इति टान्तवर्गः

529 कुवेर° *for* कुबेर°.

530 धुस्थूर° *for* धुस्तूर° ; धूर्त्तयोः *for* °धूर्तयोः .

॥ ठार्धश्लोकः ॥

**निष्ठा** निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च ।
**काष्ठा** दिक्कालमर्यादाकर्षेषु **काष्ठमि**न्धनम् ॥

**कोष्ठं** कुक्षौ कुशूले च **कोष्ठम**भ्यन्तरेऽपि च ।
पृष्ठश्चरममात्रे स्याच्छरीरावयवान्तरे ॥

**ज्येष्ठो** वृद्धेऽग्रजे श्रेष्ठे **ज्येष्ठा** च गृहयोधयोः ।
**कण्ठो** गले गलध्वाने **कण्ठः** फेणसमीपयोः ॥

**वण्ठः** कुन्तायुधे खर्वे अकृतोद्वाह एव च ।
**पाठ**स्तु पठने प्रोक्तः **पाठा** स्याद्विद्धकर्णिका ॥

**हठः** प्रसभ आख्यातो वारिपर्णी **हठी** मता ।
**कठो** मुनौ ऋचाभेदे तदध्येता च वेदिता ॥

**कमठः** कच्छपे प्रोक्तः शल्लकीभाण्डभेदयोः ।
**जरठः** कठिने ख्यातो **जरठी** पाण्डुका च गौः ॥

---

*531* ठार्द्धः *for* ठार्धश्लोकः.
*532* निःपत्ति॰ *for* निष्पत्ति॰ ; ॰नाशान्ता॰ *for* ॰नाशान्त॰; ॰याचञा॰ *for* ॰याच्ञा॰ ; ॰निर्वहणेपि *for* ॰निर्वहणेषु.
*533* ॰मर्यादे कर्षेषु *for* ॰मर्यादाकर्षेषु.
*534* अभ्यंतरेपि *for* अभ्यन्तरेऽपि.
*535* स्यात् शरीरा॰ *for* स्याच्छरीरा॰ .
*537* गलो *for* गले.
*538* खर्वेऽकृतोद्वाह *for* खर्वे अकृतोद्वाह.
*539* चाद्विद्धकर्णिका *for* स्याद्विद्धकर्णिका.
*540* ईष्ठः *for* हठः ; प्रसर *for* प्रसभ.
*541* मुलौ *for* मुनौ; कृताभेदे *for* ऋचाभेदे; चा *for* च
*542* कछपे *for* कच्छपे.

**प्रकोष्ठः** कूर्पराधः स्यात्**प्रकोष्ठं** च गृहान्तरम् ।
**कनिष्ठो**ऽल्पेऽनुजे यूनि **कनिष्ठा** काचिदङ्गुली ॥

**प्रतिष्ठा** याजनिष्पत्तावादरे स्थानमात्रके ।
**वैकुण्ठः** केशवे प्रोक्त इन्द्रो **वैकुण्ठ** इष्यते ॥

**श्रीकण्ठः** स्यान्महादेवे **श्रीकण्ठः** कुरुजाङ्गले ।
**नीलकण्ठः** शिवो बर्ही चाटकैरश्च खञ्जनः ॥

**कलकण्ठ**स्तु दात्यूहो बलाकापिकसुस्वराः ।
**दन्तशठ**स्तु जम्बीरः कपित्थश्चाम्ललोलिका ॥

**कालपृष्ठं** कर्णधनुः कङ्का [24] स्यं च खगं विदुः ।
**पूतिकाष्ठं** देवदारु विदुः सरलपादपम् ।
**हारिकण्ठः** परभृतः कण्ठो हारान्वितोऽपि यः ॥

॥ ठश्लोकः ॥

**वरिष्ठं** स्यादुरुतमं तथा गुरुतमं विदुः ।
**वरिष्ठं** शुल्वमाख्यातं **वरिष्ठ**स्तित्तिरिः स्मृतः ॥

---

*544* कुर्पराध *for* कूर्पराधः; स्मात *for* स्यात्; स *for* च.
*545* युनि *for* यूनि.
*546* याजनिपत्तौ *for* याजनिष्पत्तौ.
*547* प्रोक्तः *for* प्रोक्त; ईन्द्रो *for* इन्द्रो; ईष्यते *for* इष्यते.
*548* कुरुजांगली *for* कुरुजाङ्गले.
*549* निलकंठः *for* नीलकण्ठः; शिरो *for* शिवो; वर्हि *for* बर्ही; ठाटकैरश्च *for* चाटकैरश्च.
*550* वलाका⁰ *for* बलाका⁰; ⁰सुश्वराः *for* ⁰सुस्वराः.
*551* जंवीरः *for* जम्बीरः; कपिथः *for* कपित्थः; ⁰म्ललोनिका *for* ⁰म्ललोलिका.
*554* हारान्वितोपि *for* हारान्वितोऽपि.
*556* उरतमं *for* उरुतमं.

**अम्बष्ठा** विद्धकर्णी स्यादम्बष्ठा चाम्ललोणिका ।
**अम्बष्ठो** देशभेदे स्याद्वैश्यापुत्रे च विप्रजे ॥

॥ इति ठान्तवर्गः ॥

॥ डपादः ॥

**अण्डं** पेश्यां च मुष्के च **खण्डौ** काननगोपती ।
**पण्डः** क्लीबे मतिः **पण्डा व्याडः** पन्नगहिंस्रयोः ॥

**पीडे** वाधानुकम्पे च **गडो** मीनान्तराययोः ।
**गडुः** पृष्ठगुडे कुब्जे **षडः** पेयान्तरं भिदा ॥

[ ॥ डार्धश्लोकः ॥ ]

**पाण्डुः** कुन्तीपतौ प्रोक्तः **पाण्डुः** पाण्डर इष्यते ।
**शौण्डो** मत्ते च विख्यातः **शौण्डा** च पिप्पली मता ॥

**रण्डा** मृतधवा नारी **रण्डा** मूषिकपर्ण्यपि ।
**क्रोडः** शनैश्चरः प्रोक्तः **क्रोडौ** शूकरवक्षसी ॥

---

558 स्यात् अंबष्ठा *for* स्यादम्बष्ठा.
559 देस्याद् *for* देशभेदे स्याद्; वेश्या⁰ *for* वैश्या⁰.
560 षान्तवर्गः *for* इति ठान्तवर्गः.
561 द्रपादोदा *for* डपादः.
562 पेश्याञ्च *for* पेश्यां च; मुःके *for* मुष्के.
563 क्लिंवे *for* क्लीबे; ⁰हिंश्रयोः *for* ⁰हिंस्रयोः.
564 वाधा⁰ *for* बाधा⁰; ⁰नुकल्पे *for* ⁰नुकम्पे; गडे *for* गडो.
565 पुष्पगुडे *for* पृष्ठगुडे; कुब्जे *for* कुब्जे; गुडः *for* षडः
567 पाडुः *for* पाण्डुः; कुभीपतौ *for* कुन्तीपतौ; ईष्यते *for* इष्यते.
568 शौडे *for* शौण्डो; विष्यातः *for* विख्यातः; शौडा *for* शौण्डा.
569 मृतधना *for* मृतधवा; अपी *for* अपि.
570 ⁰रक्षसी *for* ⁰वक्षसी.

**चोडो** देशविशेषः स्या**च्चोडः** प्रावरणान्तरम् ।
**चूडा** बाहुविभूषायां **चूडे** तु वलभीशिखे ॥

**नीडं** स्थाने खगावासे सकारपूर्वकोऽन्तिके ।
**नाडी** व्रणो धमन्यां च **नाडी** स्यान् [ नाल ] कालयोः ॥

**इडा** चन्द्रकलाद्यं स्याद्रवि भूमौ च वाचि च ।
**जडो** मूर्खे हिमग्रस्ते शूकशिम्बी **जडा** मता ॥

**प्रकाण्डो** विटपे शस्ते मूलस्कन्धान्तरे तरोः ।
**पिचिण्ड** उदरे ज्ञेयः **पिचिण्डो**ऽवयवः पशोः ॥

**शिखण्डः** कथितः सद्भिश्चूडायां शिखिपुच्छके ।
**कोदण्डं** कार्मुकं प्रोक्तं **कोदण्डो** भ्रूलतापि च ॥

**निर्गुण्डी** सिन्धुवारे स्यात्स्वर्णसेफालिकापि च ।
**द्राविडाः** स्यु [ *25* ] र्जनपदा **द्राविडो** वेधमुख्यकः ।
**चक्रवाडो**ऽद्रिभेदे स्या**च्चक्रवाडं** तु मण्डलम् ॥

---

*571* देशविशेष *for* देशविशेषः.
*572* बाहु° *for* वाहु°; वभी° *for* वलभी°.
*573* निडं *for* नीडं; स्थोने *for* स्थाने; नकार° *for* सकार°; °पूर्वकोन्तिके *for* °पूर्वकोऽन्तिके.
*574* काल्योः *for* [ नाल ] काल्योः.
*575* ईडा *for* इडा; स्यादरी *for* स्याद्रवि; भू *for* भूमौ.
*576* शूकाशींवि *for* शूकशिम्बी.
*577* °कंधांतरे *for* °स्कन्धान्तरे; तयोः *for* तरोः.
*578* पिच्चिंडोवयवः *for* पिचिण्डोऽवयवः.
*579* °पुछके *for* °पुच्छके.
*580* कार्म्मुकं *for* कार्मुकं; भूतलापि *for* भ्रूलतापि.
*581* स्वर्ग° *for* स्वर्ण°.
*583* चक्रवाडोद्रि° *for* चक्रवाडोऽद्रि°; चक्रवाडन्तु *for* चक्रवाडं तु.

॥ डश्लोकः ॥

**काण्डं** चावसरे बाणे नाले स्कन्धे च शाखिनाम् ।
स्तम्बे रहसि वृन्दे च गर्ह्यपानीययोरपि ॥

**भाण्डं** भूषणमात्रे स्यात्तुरंगाभरणेऽपि च ।
मूलं वणिग्धनं **भाण्डं** [**भाण्डं**] भाजन इष्यते ॥

**कुण्डः** स्यात्पतिवत्नीनां जारसंजनितः सुतः ।
देवानां च जलाधारः **कुण्डं** कुण्डमुखा स्मृता ॥

**गण्डो** व्याधौ कपोले स्यादश्वभूषणबुद्बुदे ।
**गण्डश्चाप्यतिगण्डश्च** ग्रहयोगे प्रकीर्तितौ ॥

**दण्डो** दमे मानभेदे चण्डांशोः पारिपार्श्वके ।
**दण्डो** लगुडमन्थानयमसैन्येषु वाजिनि ॥

**चण्डो** दैत्यान्तरे तीव्रे **चण्डो** दासे यमस्य च ।
**चण्डौ**षधिरुमा **चण्डी चण्डी** स्यात्कोपनाङ्गना ॥

---

585 चविसरे *for* चावसरे; वाणे *for* बाणे.

586 स्तने *for* स्तम्बे; वद्धे *fro* वृन्दे; गर्जह्यपापियसोरपि *for* गर्ह्यपानीययोरपि.

587 भांडे *for* भाण्डं; ⁰भरणेपि *for* ⁰भरणेऽपि.

588 मूलं वनीग्धनं *for* मूलं वणिग्धनं; *add* भाण्डं *after first* भाण्डं

589 कुडं *for* कुण्डः.

590 स्मृताः *for* स्मृता.

591 गंडौ *for* गण्डो; स्यात्दश्वभूषणवुद्बुदे *for* स्यादश्वभूषणबुद्बुदे.

592 गंडाश्च *for* गण्डश्च; प्रकिर्त्तितौ *for* प्रकीर्तितौ.

593 चंडाशोः *for* चण्डांशोः.

594 लगुडमत्थानयमदैन्येषु *for* लगुडमन्थानयमसैन्येषु; राजिनि *for* वाजिनि.

595 तित्रे *for* तीव्रे.

**पिण्डं** गन्धरसे गृहाग्रिमगृहे स्यात्पिण्डमाजीवने
जङ्घायाः पिशिते तथौड्रकुसुमे दाने पितृभ्येऽपि च ।
**पिण्डौ** सिह्लकगोलकौ च तगरीखर्जूरभेदौ स्मृतौ
**पिण्डी** ज्ञाननिरूपणार्थक उपन्यासस्तथालाबुका ॥

**ताडः** स्मृतो देवताडे **ताडी** तालिदलद्रुमः ।
मुष्टिमेयतृणादौ च **ताडः** स्यात्ताडने ऽ पि च ॥

**क्ष्वेडः** कर्णामये शब्दे विषघोषकयोरपि ।
योधानां सिंहनादोऽपि **क्ष्वेडा** वाद्यं च वैणवम् ॥

**गुडः** स्याद्धस्तिसंनाहे **गुडो** गोलेक्षुपाकयोः ।
[ 26 ] **गुडा** तु गुडिका ज्ञेया स्नुही च कथिता **गुडा** ॥

**कुष्माण्डः** स्यात्तु कर्कारुः **कुष्माण्डः** प्रमथान्तरम् ।
औषधिश्चापि **कुष्माण्डी** [ **कुष्माण्डी** ] चण्डिका स्मृता ॥

---

597 पिडं *for* पिण्डं; गृहाग्रिमगुरिस्था *for* गृहाग्रिमगृहे स्यात्.
598 ओडकुसुमे *for* ओड्रकुसुमे.
599 पिडौ *for* पिण्डौ; सिक्तक⁰ *for* सिह्लक.
600 अलाबुका *for* अलाबुका.
601 तालिदमद्रुमः *for* तालिदलद्रुमः.
602 मुष्टिमय⁰ *for* मुष्टिमेय⁰; ताडनेपि *for* ताडनेऽपि.
603 कर्णायमे *for* कर्णामये; शब्दे *for* शब्दे.
604 सिंहनादोपि *for* सिंहनादोऽपि; वैणरं *for* वैणवं.
605 ⁰सालाहे *for* संनाहे; ⁰पाकयो *for* ⁰पाकयोः.
606 सुहि *for* स्नुही.
608 ओषधीश्चापि *for* ओषधिश्चापि; चण्डिका *for* चण्डिका.

अपोगण्डस्तु वलिभिर्व्याप्तदेहः प्रकीर्तितः ।
शिशुर्दशसमा यावदपोगण्डः स्मृतो बुधैः॥

॥ इति डान्तवर्गः ॥

॥ ढपादः ॥

सोढा स्यान्मर्षितः शक्तो वोढा भारिकमूढयोः ।
मूढस्तु मुग्धजडयोः वाढं भृशप्रतिज्ञयोः ॥

संमूढो दमितेऽप्यूढे उदूढः पृथुलोढयोः ।
प्रगाढः स्याद्दृढे कृच्छ्रेऽध्यारूढो ऽधिकरूढयोः ॥

॥ ढार्धश्लोकः ॥

व्यूढः पृथुतरे ख्यातो न्यस्तसंहतयोरपि ।
दृढः स्थूले नितान्ते च प्रगाढे बलवत्यपि ॥

---

609 प्रकीर्त्तितः *for* प्रकीर्तितः.
610 अयोगण्डः *for* अपोगण्डः; स्मृतौ *for* स्मृतो; वुधैः *for* बुधैः.
611 डान्ताः *for* इति डान्तवर्गः
612 टपादः *for* ढपादः.
613 सोटा *for* सोढा; मर्षिता *for* मर्षितः; शक्ता *for* शक्तो. भाविक⁰ *for* भारिक⁰.
614 मूढोस्तु *for* मूढस्तु; ग्धस्त्रिजटयोः *for* मुग्धजडयोः; वाढं *for* बाढं.
615 सम्पुटो *for* संमूढो; दमितेप्यूढे *for* दमितेऽप्यूढे; उदुटः *for* उदूढः; पृथुलोटयोः *for* पृथुलोढयोः.
616 प्रागाढः *for* प्रगाढः; स्याट्टटे *for* स्याद्दृढे; कृक्षे *for* कृच्छ्रे; अधिरूढयोः *for* अधिकरूढयोः.
617 टार्द्धः *for* ढार्धश्लोकः.
618 च्युढः *for* व्यूढः; पृथुतरो *for* पृथुतरे.
619 वलवत्यपि *for* बलवत्यपि.

**माढिः** पत्रादिभङ्गे स्यान्**माढि**र्दैन्यप्रकाशनम् ।
**शण्ढौ** तु गोपतिक्लीबौ **शण्ढः** स्यात्तु प्रमत्तके॥

**अध्यूढा** कृतसापत्न्याम**ध्यूढो** वृद्धिमानयोः ।
**उपोढः** कथितो व्यूढे समासन्ने विवाहिते ।

**आषाढो** व्रतिनां दण्डे मासपर्वतभेदयोः ॥

॥ इति ढान्तवर्गः ॥

॥ णपादः ॥

**घृणा** कृपा जुगुप्सा च **तृष्णा** लिप्सापिपासयोः ।
**कर्णौ** श्रवणराधेया**वुष्णौ** ग्रीष्मातपौ स्मृतौ ॥

**जीर्णे** पक्वपुराणे [ च ] **भ्रूणो**ऽप्यर्भकगर्भयोः ।
**स्थूणा** स्तम्बे च शूर्म्यां च **पर्णा**ख्या किंशुके छदे ॥

---

620 माटिः *for* माढिः; माटिः *for* माढिः.

621 शेटौ *for* शण्ढौ ; गोपत्तिक्लीवौ *for* गोपतिक्लीबौ; शन्टः *for* शण्ढः ; स्यात्तुमत्तक *for* स्यात्तु प्रमत्तके.

622 कृतसापत्न्याऽध्यूढो *for* कृतसापत्न्यामध्यूढो; अधिकवृद्धिमाणयोः *for* वृद्धिमानयोः.

623 व्यूटे *for* व्यूढे; समासत्वे *for* समासन्ने.

624 अषाढो *for* आषाढो.

625 ढान्तः *for* इति ढान्तवर्गः.

627 तिक्षा *for* तृष्णा.

628 श्रवाधेयौ *for* श्रवणराधेयौ; उक्षौ *for* उष्णौ.

629 भ्रुणोप्यृर्भक° *for* भ्रूणोऽप्यर्भक°.

630 स्तम्वे *for* स्तम्बे.

स्थाणुः शिवे [ स्थि ] रे कीले वृष्णिर्यादवमेषयोः ।
रणः स्यात्संयुगे क्वाणे शाणः कषमाषचतुष्कयोः ॥

[ 27 ] वेणुर्नृपान्तरे वंशे रेणुः स्वल्पे रजस्यपि ।
कीर्णं छन्ने परिक्षिप्ते शीर्णं तनुविशीर्णयोः ॥

लक्षणं नाम्नि चिह्ने च कोङ्कणः शस्त्रदेशयोः ।
दुर्वर्णं रूप्येऽसद्वर्णे प्रोक्षणे वधसेचने ॥

कुर्वाणः कारके भृत्ये घर्मणोऽहिद्रुमेदयोः ।
संकीर्णौ निचिताशुद्धौ द्रविणे वित्तविक्रमौ ॥

कारणं घातने हेतावीरिणं शून्यमूषरम् ।
वारुणी सुराप्रतीच्योः सरणिः पङ्क्तिमार्गयोः ॥

प्रवेणी च कुथावेण्योः करेणू हस्तिनीगजौ ।
ब्राह्मणी ब्रह्मयष्टिश्च ग्रामीणा नीलिकापि च ॥

631 शिवेरे *for* शिवे स्थिरे; वीष्णीः *for* वृष्णिः; °मेधयोः *for* मेषयोः.

632 स्थिरणः *for* रणः; संयुगें *for* संयुगे; शष° (*before corr.*) *for* कष°; °तुतुक्षयोः *for* °माषचतुष्कयोः.

633 णपांन्तरे *for* नृपान्तरे; स्वल्प° *for* स्वल्पे.

634 क्रिन्ने *for* छिन्ने; शीर्णन्तनु° *for* शीर्णं तनु°.

635 नान्मि *for* नाम्नि; चिन्हे *for* चिह्ने; शस्त° *for* शस्त्र°.

636 दुर्वर्णं *for* दुर्वर्णं.

637 धर्मणोहि° *for* धर्मणोऽहि°

638 संकिर्णौ *for* संकीर्णौ.

639 करणं *for* कारणं; पातने *for* घातने; ईरणं *for* ईरिणं; ऊषरं *for* ऊषरं.

640 °प्रतिच्योः *for* °प्रतीच्योः; सरणीः *for* सरणिः; °मार्दयोः *for* °मार्गयोः.

642 व्राह्मणी *for* ब्राह्मणी; व्रह्मयष्टि च *for* ब्रह्मयष्टिश्च; ग्रामिणा *for* ग्रामीणा; निलिका *for* नीलिका.

॥ णार्धश्लोकः ॥

**शोणः** कोकनदच्छवौ निगदितः **शोणः** समुद्रान्तरं
**शोणो** लोहितघोटकोऽपि च तयोर्भेदे च **शोणः** स्मृतः ।
**वाणः** स्यादसुरान्तरे कविवरे **वाणी** च वाग्देवता
**वाणौ** केवलकाण्डयोश्च कथितौ **वाणा** स्मृता झिण्टिका ॥

**शाणः** ? कम्बललोम्नि स्याच्छाणी प्रावरणान्तरम् ।
**वेणी** स्यात्पयसां मध्ये बन्धभेदे शिरोरुहाम् ॥

**ऊर्णा** मेषादिलोम्नि स्याद्भ्रूमध्यावर्तकेऽपि च ।
**श्रेणिः** समानवर्णानां संहतिः **श्रेणिरावलिः** ॥

**पार्ष्णिः** कुन्त्यां समाख्याता सेनापृष्ठाङ्घ्रिपार्श्वयोः ।
**जिष्णुश्च** जित्वरे शक्रे तथा मध्यमपाण्डवे ॥

---

643 णार्द्धः *for* णार्धश्लोकः.

644 कोकणद⁰ *for* कोकनद⁰; ⁰द्यूतौ *for* च्छवौ.

645 ⁰घोटकोपि *for* ⁰घोटकोऽपि.

646 करिवरे *for* कविवरे.

647 रामौ *for* वाणौ; ⁰कणा च *for* ⁰काण्डयोश्च; कथिता ( *before corr.* ) कथितौ; वाणः *for* वाणा; झिटिका ( *before corr.* ) झिण्टिका.

648 शाणे *for* शाणः; कम्वँलोन्मि *for* कम्बललोम्नि; स्याछाणी *for* स्याच्छाणी.

649 वंधभेदै *for* बन्धभेदे.

650 र्तिर्णा *for* ऊर्णा; ⁰लोन्मि *for* ⁰लोम्नि; स्याद्रुमध्येवर्त्तकेपि *for* स्याद्भ्रूमध्यावर्तकेऽपि.

651 श्रेणीः *for* श्रेणिः; ⁰वर्णाणां *for* वर्णानां; संहितिः *for* संहतिः.

652 पार्ष्णि *for* पार्ष्णिः; कुल्यां *for* कुन्त्यां; सेनापृष्ठेंध्रि⁰ *for* सेनापृष्ठाङ्घ्रि⁰.

653 तदा *for* तथा; ⁰पांडरे *for* ⁰पाण्डवे.

विष्णुर्नारायणे शुद्धे विष्णुश्च वसुदेवता ।
अणुःस्वल्पे व्रीहिभेदे श्वभ्रेऽप्यणुरु [ 28 ] दाहृतः ॥

गणः स्यात्प्रमथे संघे संख्यासैन्यप्रभेदयोः ।
क्षणो व्यापारशून्यत्वे मुहूर्तोत्सवपर्वसु ।
कणोऽतिसूक्ष्मे धान्यांशे पिप्पल्यां जीरके कणा ॥

धर्षणं निधुवने पराभवे धर्षणी च गदिताथ पुंश्चली ।
कङ्कणं वरविवाहमुद्रके मण्डने च वलये च शेखरे ॥

मत्कुणोऽश्मश्रुपुरुष उद्दंशादन्तदन्तिनोः ।
हर्षणोऽक्षिरुजां भेदे हर्षणौ [ योग ? ] हर्षकौ ॥

वारणं प्रतिषेधः स्याद्वारणो गज उच्यते ।
मार्गणो याचके बाणे याच्ञान्वेषणयोरपि ॥

एषणी व्रणमार्गानुसारिणी वणिजां तुला ।
क्षेपणी जालभेदे स्यान्नौकादण्डे च कीर्तिता ॥

---

655 खले *for* स्वल्पे; प्रव्रिहिभेदे *for* व्रीहिभेदे.
656 प्रथमे *for* प्रमथे.
657 क्षणे *for* क्षणो; वापार⁰ *for* व्यापार⁰; मुहूर्त्तो⁰ *for* मुहूर्तो⁰.
658 कणेतिसूक्ष्मे. *for* कणोऽतिसूक्ष्मे.
659 निधुवणे *for* निधुवने.
660 मंडले *for* मण्डने; शेषरे *for* शेखरे.
661 अश्रव्य⁰ *for* अश्मश्रु⁰; उदंशा⁰ *for* उद्दंशा⁰.
662 ⁰हर्षकौ *for* योगहर्षकौ.
664 मर्दण्यो *for* मार्गणो; याजके *for* याचके; वाणे *for* बाणे; याच्ञा⁰ *for* याच्ञा⁰.
665 ⁰मार्दानुसारिणी *for* ⁰मार्गानुसारिणी; वणिजान्तुला *for* वणिजां तुला.
666 नौकाद्रंडे *for* नौकादण्डे; कीर्त्तिता *for* कीर्तिता.

**हरेणुश्च** कलापः स्याद्धरेणुश्चापि रेणुका ।
**इन्द्राणी** सिन्दुवारे स्याच्छच्यां स्त्रीकरणेऽपि च ॥

**ग्रामणीश्च** प्रधाने स्यात्पतिनापितभोगिषु ।
**सिङ्घाणं** काचपात्रे स्याल्लोहनासिकयोरपि ॥

**कल्याणं** मङ्गलं विद्यात्काञ्चनं यदक्षयम् ।
**निर्याणं** द्विरदापाङ्गे मोक्षे निर्गमनेऽपि च ॥

**विषाणं** द्विरदक्रोडदन्ते शृङ्गे पशोरपि ।
**श्रीपर्णमग्निमन्थः** स्यात्कम्भार्यां कमलेऽपि च ॥

**पत्रोर्णं** धौतकौशेयं **पत्रोर्णं** शोणकं विदुः ।
**सुवर्णं** हेम्नि तत्कर्षे **सुवर्णं** हरिचन्दने ॥

**सुपर्णौ** तार्क्ष्यवासन्तौ ? **सुपर्णा** गरुडप्रसूः ।
**विपणिः** पण्यवीथी स्याद्द्वि [29] **पणिश्चापणः** स्मृतः ॥

---

667 दरेणुः *for* हरेणुः.
668 ईन्द्राणी *for* इन्द्राणी; सिन्दुरावै *for* सिन्दुवारे; स्याछ्न्यां *for* स्याच्छच्यां; स्त्रीकरणेपि *for* स्त्रीकरणेऽपि.
669 ⁰नापितिनापित⁰ *for* ⁰नापित⁰.
670 सिघाणं *for* सिङ्घाणं.
671 दयदक्षतां *for* च यदक्षयं.
672 निर्गमनोपि *for* निर्गमनेऽपि.
673 ⁰दन्त *for* ⁰दन्ते; शृगे *for* शृङ्गे.
674 अग्रिमंथः *for* अग्निमन्थः; स्यात्कुम्भार्यां *for* स्यात्कम्भार्यां; कमलेपि *for* कमलेऽपि.
675 पत्रार्णं *for* पत्रोर्णं; पात्रार्णं *for* पत्रोर्णं.
676 हेन्मि *for* हेम्नि.
677 ⁰वासानौ *for* वासन्तौ; गरुडप्रसुः *for* गरुडप्रसूः.
678 आपनः *for* आपणः.

**तरणिः** कुमारिकाख्यायामोषधौ नावि भास्करे ।
**भरणी** घोषके ऋक्षे **भरणं** वेतने भृतौ ॥

**धिषण**स्त्रिदशाचार्ये **धिषणा** धीरपि स्मृता ।
**लवणाः** कथिता भेदाः समुद्ररसरक्षसाम् ॥

**वरणः** स्मृतः प्राकारे **वरणो** वरणद्रुमे ।
**श्रवणो** नक्षत्रभेदे स्याच्छ्रवणं श्रुतिकर्णयोः ॥

**चरणो**ऽङ्घ्रौ बह्वृचादौ च **चरणं** भ्रमणे दले ।
**शरणं** गृहरक्षित्रोः **शरणं** रक्षणे वधे ॥

**हरणं** यौतुकद्रव्ये हृतौ **हरण**मिष्यते ।
**वरुणः** कथितः सूर्ये **वरुणौ** तरुदिक्पती ॥

**रवणः** शब्दने प्रोक्तो **रवणो** गर्दभः स्मृतः ।
**धरणो** मानभेदे स्याद्धरणी धारणे भुवि ॥

---

680 षोषके *for* घोषके; वेतनौ *for* वेतने.
681 धिरपी *for* धीरपि; स्मृतः *for* स्मृता.
682 कथिताः *for* कथिता.
683 स्मृत *for* स्मृतः, प्रकारे *for* प्राकारे.
684 स्याछ्रवणं *for* स्याच्छ्रवणं.
685 चरणोंघ्रौ *for* चरणोऽङ्घ्रौ; वहृचादौ *for* बह्वृचादौ; चरणे च *for* च चरणं; भ्रमरे *for* भ्रमणे.
688 तरूदिकपतीं *for* तरुदिक्पती.
689 शव्दने *for* शब्दने; गर्द्धभः *for* गर्दभः.
690 मणिभेदे (*before corr.*) *for* मानभेदे; धरणे *for* धारणे; भुविः *for* भुवि.

**करुणः** सदये वृक्षभेदे च **करुणा** दया ।
**तरुणं** विदुरेरण्डं **तरुणौ** युवनूतनौ ॥

**रमणं** पटोलमूलं च **रमणः** कान्त इष्यते ।
**ऊषणं** मरिचे ख्यात**मूषणा** पिप्पली मता ॥

**श्रमणा** भिक्षुणी प्रोक्ता मुण्डीरी **श्रमणा** मता ।
**अरणि**र्वह्निमन्थे स्या**द्**र**णि**र्मन्थ्यदारुणि ॥

**आतर्पणं** प्रीणने स्यान्मङ्गलालेपनेऽपि च ।
**प्रवारणं** [ निषेधे ? ] स्यात्काम्यदानं **प्रवारणम्** ॥

**विदारणं** [ रणे भेदे विडम्बे च **विदारणं** ? ]॥
**आरोहणं** स्यात्सोपानं समारोहणमात्रकम् ॥

**उद्धरणं** समुद्धारे वान्ता [ न्ते ] वमने ऽपि च ।
**निरूपणं** विचारे स्यात्परीक्षायां च दर्शने ॥

---

692 विदुरंडं ( *before corr.* ) *for* विदुरेरण्डं; पुत॰ (*befcer corr.*) *for* युव॰.

693 ईष्यते *for* इष्यते.

694 उषणा *for* ऊषणं; ष्यातःमुखणा *for* ख्यातमूषणा.

695 भिक्षुही *for* भिक्षुणी; श्रवणा *for* श्रमणा.

696 वह्नि॰ *for* वह्नी॰; ॰निर्म्मन्थ॰ *for* ॰ मन्थे; दारु स्याददणिकारिका *for* स्यादरणिर्मन्थ्यदारुणि.

697 अतर्पणं *for* आतर्पणं; मंगल्यालेपणेपि *for* मङ्गलालेपनेऽपि.

698 स्यात् *for* निषेधेस्यात् ; प्रकरणं *for* प्रवारणं.

700 आरोहनं *for* आरोहणं.

701 लेपणेपि *for* वमनेऽपि.

702 परिक्षायां *for* परीक्षायां.

परायण [ म ] भीष्टे स्यात्तत्परे च परायणम्
पारायणं [30] समासंगे कार्त्स्न्ये पारायणं मतम् ॥

समीरणः स्मृतो वाते समीरणः फणिज्झके । 705
नारायणो हृषीकेशे नारायणी शतावरी ॥

देवमणिः समाख्यातः कौस्तुभे वाजिलक्षणे ।
उत्क्षे णं तु व्यजनं धान्यमर्दनवस्तुषु ॥

निगरणमभ्यवहारे निगरणो गल उच्यते ।
दाक्षायण्यो विदुर्दुर्गामश्विनाद्याश्च तारकाः ॥ 710

अ ारिणी रवित्यक्ता दिक् स्यादङ्गारधानिका ।
पीलुपर्णी तु मूर्वा स्यात्पीलुपर्णी तु बिम्बिका ॥

तैलपर्णी तु श्रीवासे तथा भवति चन्दने ।
पुष्करिण्यो जलाधाराः सरस्यश्च प्रकीर्तिताः ॥

शिखरिण्यः स्मृताश्छन्दोमल्लिकानवमालिकाः । 715

---

703 परायणभीष्वे *for* परायणमभीष्टे; स्यातत्परे *for* स्यात्तत्परे.
704 परायणं *for* पारायणं.
705 फणिझके *for* फणिज्झके.
706 शतावरीः *for* शतावरी.
708 उत्क्षेपनं *for* उत्क्षेपणं.
709 गण *for* गल.
710 दाक्षायनिं[२] *for* दाक्षायण्यों; विदु *for* विदुर्.
711 रवी[0] *for* रवि[0].
712 पीनुपर्णी *for* पीलुपर्णी; मुर्वा *for* मूर्वा; पील्लुपर्णी *for* पीलुपर्णी; विर्म्मिका *for* बिम्बिका.
714 जलधारः ( *before corr.* ) जलाधाराः ; प्रकीत्तिता *for* प्रकीर्तिताः.
715 [0]मलिका[0] *for* [0]मल्लिका[0].

प्रविदारणमाख्यातं विद्वद्भिर्दारणे रणे ।
अवग्रहणमित्येतत्प्रतिरोधेऽप्य [ ना ] दरे ॥

॥ णश्लोकः ॥

गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये ।
शुल्वे विद्यादिसत्त्वादिसन्ध्यादिहरितादिषु ॥

पणो माने वराटानां मूल्ये कार्षापणे धने ।
द्यूते विक्रय्यशाकादेर्बद्धमुष्टौ भृतौ गृहे ॥

मणिं चालिञ्जरं विद्यान्मेहनावयवो मणिः ।
रत्नं मणिरजानां च कण्ठदेशस्तने मणिः ॥

कोणोऽश्रौ लगुडे कोणः कोणो वीणादिवादनम् ।
एकदेशे गृहादीनां कोणः सद्भिरुदाहृतः ॥

प्राणो हृन्मारुते शक्तौ प्राणाः स्युरसवस्तथा ।
प्राणो [ 31 ] गन्धरसे प्रोक्तः पद्यानामप्यलंकृतौ ॥

---

716 आख्यातां *for* आख्यातं; विद्वद्भिःर् *for* विद्वद्भिः ; दारुणे ( *before corr.* ) *for* दारणे.

717 प्रतिरोधेप्यदरे ( *before coor.* ) प्रतिरोधेऽप्यनादरे.

719 मौर्वाम् *for* मौर्व्याम् ; मृग *for* सूद; ईद्रिये *for* इन्द्रिये.

720 शुद्धे *for* शुल्वे; ⁰सत्वादि *for* ⁰सत्त्वादि⁰ ; ⁰सल्क्यंदि⁰ *for* ⁰सन्ध्यादि⁰ .

721 मुल्ये *for* मूल्ये; कार्षापने *for* कार्षापणे.

722 द्यूते *for* द्यूते; वर्द्धं मुष्टौ *for* बद्धमुष्टौ; ग्रहे *for* गृहे.

723 च लिंजरं *for* चालिञ्जरं.

724 ⁰ स्तले *for* ⁰ स्तने.

725 कोणोस्रौ *for* कोणोऽश्रौ; कोनः *for* कोणः .

727 प्राणे ( *before corr.* ) प्राणो; असयः *for* असवः .

728 पाद्यानाम् *for* पद्यानाम्.

**द्रोणो** मानवि [ शे ] षे स्यात्काकेऽर्जुनगुरौ तथा ।
पानीयोद्धरणी **द्रोणी** देशभेदे च कीर्तिता ॥

**चूर्णं** क्षोदे च धूलौ च **चूर्णं** स्यान्मृगयाचनम् ।
**चूर्णानि** वासयोगाः स्युश्चूर्णिः कपर्दिकापि च ॥

**कृष्णाः** स्युः शस्त्रकव्यासविष्णुनीलधनंजयाः ।
**कृष्णं** च [ म ] रिचे **कृष्णां** पिप्पलीं द्रौपदीं विदुः ॥

**वर्णो** गुणाक्षरयशःशुक्लादिब्राह्मणादिषु ।
कुथास्तुत्यनुलेपेषु **वर्णं** स्याद्भेदरूपयोः ॥

**तीक्ष्णं** स्यात्संयुगे लोहे विषतिग्मात्मघातिषु ।
निरालस्ये सुबुद्धौ च **तीक्ष्णमा**चक्षते बुधाः ॥

[ **निर्वाण**मस्तंगमनं **निर्वाणं** गजमज्जनम् ? । ]
**निर्वाण**मपवर्गोऽपि **निर्वाणं** निर्वृतिं विदुः ॥

---

729 नामविषे *for* मानविशेषे; काकेजुनगुरौ *for* काकेऽर्जुनगुरौ.

730 पाणीयो॰ ( *before corr.* ) पानीयो॰ ; कीर्त्तिता *for* कीर्तिता.

731 चूर्ण *for* चूर्णं.

732 चूर्णाणि *for* चूर्णानि; वाशुयोगाः *for* वासयोगाः ; स्युः चूर्णिः *for* स्युश्चूर्णिः.

733 ॰धनंययाः *for* ॰धनंजयाः.

734 चरिचे *for* च मरिचे; द्रोपदीं *for* द्रौपदीं.

735 ॰यसः॰ *for* ॰यशः॰ ; ॰शुक्रादि॰ *for* ॰शुक्लादि॰ ; ब्राह्मणादिषु *or* ॰ब्राह्मणादिषु.

736 ॰अनुलोपेषु *for* अनुलेपेषु.

737 तीक्षं *for* तीक्ष्णं; ॰तिग्मार्थ॰ *for* ॰तिग्मात्म॰ .

738 श्वबृद्धै ; *for* सुबद्धौ; तीक्षंमाचक्षते *for* तीक्ष्णमाचक्षते; बुधाः *for* बुधाः .

740 अपरज्ञोऽपि *for* अपवर्गोऽपि; निर्घानं *for* निर्वाणं; निवृतिं *for* निर्वृतिं.

**गोकर्णो** दन्दशूके स्यान्मृगप्रमथभेदयोः ।
अङ्गुष्ठानामिकोन्माने **गोकर्णी** पिलुपर्णिका ॥

**प्रमाणम**नुमानादौ हेतुमर्यादयोरपि ।
सम्यक्प्रवक्तृपुरुषे **प्रमाणं** मानशास्त्रयोः ॥

**दक्षिणो** दक्षे तद्भूते ऋजुच्छन्दानुवर्तिनोः ।
**दक्षिणा** यज्ञनिष्पत्तिदाने दिशि च कीर्तिता ॥

**लक्ष्मणः** सहलक्ष्मीके चिह्ने दशरथात्मजे ।
**लक्ष्मणा** सारसस्त्री स्याल्लक्ष्मणा काचिदोषधिः ॥

**पूरणः** पूरके प्रोक्तो विष्णुतैले च **पूरणः** ।
पटारम्भकसत्रेषु **पूरणी** शाल्मली मता ॥

**अरुणो**ऽस्फुटरागे स्यात्सूर्ये च सूर्यसारथौ ।
[ 32 ] सन्ध्यारागे च कुष्ठे च रक्ते चातिविषा**रुणा** ॥

**प्रवणः** क्रमनिम्नोर्व्यां प्रह्वे च स्याच्चतुष्पथे ।
आयत्ते च तथा क्षीणे **प्रवणः** समुदाहृतः ॥

---

741 दंदसूके *for* दन्दशूके; मगप्रथम० *for* मृगप्रमथ०.
742 ०उन्मा *for* ०उन्माने.
743 अनुजालादौ *for* अनुमानादौ.
744 ०प्रवभ्रु० *for* ०प्रवक्तृ० ; माण० *for* मान०.
745 दक्षि *for* दक्षे; ० छन्दानुवर्त्तिनो *for* ०च्छन्दानुवर्तिनोः.
746 दक्षिणो *for* दक्षिणा; कीर्त्तिता *for* कीर्तिता.
748 सारसा० *for* सारस०.
749 पुरणः *for* पूरणः.
750 पटारंभ० *for* पटारम्भक०.
751 अरुणोस्फुट० *for* अरुणोऽस्फुट०; व *for* च.
752 कृष्णे *for* कुष्ठे; अरुणाः *for* अरुणा.
753 क्रमनिर्म्मोर्व्यं *for* क्रमनिम्नोर्व्यां. चतुप्पथे *for* चतुष्पथे.

**करणं** कायकायस्थसाधनेन्द्रियकर्मसु ।
वन्धे च वालवादौ च **करणः** शूद्राविशोः सुतः ॥

**ग्रहणं** राहुणा ग्रासे रवीन्द्वोर्ग्रा करे तथा ।
बन्दिस्वीकारयोश्चैव **ग्रहणी** तु रुजान्तरम् ॥

**हरिणी** हरिता स्वर्णप्रतिमा **हरिणी** मृगी ।
**हरिणी** चारुस्त्रीभेदे **हरिणौ** मृगपाण्डरौ ॥

**रोहिणी** गौश्च ऋक्षं च रक्ता च कटुरोहिणी ।
**रोहिणी** सोमवल्के च कण्ठरोगे च **रोहिणी** ॥

**सारणः** स्याद्भद्रबला **सारणी** सरिदुच्यते ।
**सारणं** गन्धभेदं च प्राहू रावणमन्त्रिणम् ॥

**काकणी** मानदण्डस्य तुरीयांशे पणस्य च ।
कृष्णलैकवराट्योश्च कुष्ठभेदश्च **काकणः** ॥

**संसरणं** तु संसारेऽप्यसंबाधचमूगतौ ।
पुरीणां निर्गमद्वारे घण्टापथे च कीर्तितम् ॥

---

755 °कर्म्मसु *for* °कर्मसु.
756 वद्धो *for* बन्धे; शुद्र° *for* शूद्रा° ; सुताः *for* सुतः .
757 राहुना *for* राहुणा; सरे *for* करे.
758 वदी° *for* बन्दि° ; °श्वीकारयोः *for* °स्वीकारयोः .
760 चास्त्रीभेदे *for* चारुस्त्रीभेदे.
762 सोमवत्वे *for* सोमवल्के.
763 भद्रवला *for* भद्रबला सविद् *for* सरिद्.
764 गंधभेदश्च *for* गन्धभेदं च.
766 कृष्णलोषरवाट्योश्च *for* कृष्णलैकवराटयोश्च;; शुद्र° *foi* कुष्ठ°
767 संसारेप्यसम्वाधतमूगतौ *for* संसारेऽप्यसंबाधचमूगतौ.

**परिभाषण**मालापो नियमः **परिभाषणम्** ।
निन्दार्थक उपालम्भे **परिभाषण**मिष्यते ॥

**मत्तवारण**माख्यातो धीरैः समददन्तिनि ।
महाप्रासादभित्तीनामग्रे वृक्षावृतौ तथा ॥

॥ इति णान्तवर्गः ॥

॥ तपादः ॥

**द्युतिः** प्रभा **द्युतिः** कान्ति**र्भृति**र्भरणमूल्ययोः ।
**सुप्तिः** स्पर्शाज्ञता [ *33* ] निद्रा **भित्तिः**कुड्यप्रदेशयोः ॥

**चितिः** समूहे चित्यायां **सृतिः** स्यात्पद्धतौ गतौ ।
**क्षिति**र्भूक्षयवासेषु **मति**र्धीच्छास्मृतिष्वपि ॥

**अर्तिः** पीडाध[ नु ]ष्कोटयो**र्भ्रान्ति**र्मिथ्यामतिर्भ्रमिः
**कीर्तिः** प्रसादयशसोः **कृत्ति**श्च चर्म कीर्तिता ॥

---

769 परिभाश्रणं *for* परिभाषणं; आलायो ( *before corr.* ) आलापो.
770 उपारंभे *for* उपालम्भे.
772 °मित्तिनाम् *for* °भित्तीनाम्.
773 णान्तः *for* इति णान्तवर्गः.
775 भतिर् *for* भृतिर्.
776 स्पर्शांगता *for* स्पर्शाज्ञता.
777 स्मृति *for* सृतिः; स्या *for* स्यात्.
778 मतिरिच्छा° *for* मतिर्धीच्छा.
779 अर्त्तिः *for* अर्तिः; °धष्कोट्यो *for* °धनुष्कोट्योर्; °मतिम्मतिः *for* °मतिर्भ्रमिः.
780 कीर्त्तीः *for* कीर्तिः; प्रासाद° *for* प्रसाद°; कीर्त्तिः *for* कृत्ति; चर्म्म *for* चर्म; किर्त्तिता *for* कीर्तिता.

शान्तिः शमे च कल्याणे कान्तिः शोभेच्छयोरपि ।
ऊतिः स्यूतौ च रक्षायां स्रातिर्दानावसानयोः ॥

मुक्तिः स्यान्मोचने मोक्षे युक्तिर्न्याये नियोजने ।
चिता छन्ने चुल्लिकायां त्रेता वह्नित्रये युगे ॥

सातिर्मूर्खकृतं स्रातिः ? प्रोतं गुम्फितवाससोः ।
व्यक्तं स्फुटं बुधो व्यक्तः श्रुतं शास्त्रेऽवधारिते ॥

घृतमाज्यं घृतं तोये युतं न्याये च संहते ।
रक्तः क्रीडारते रक्ते शुक्तं स्यात्परुषाम्लयोः ॥

भृतं स्याद्याचिते मृत्यौ जातं जन्मसमूहयोः ।
धुतं तु कम्पिते त्यक्ते वृत्ते चारित्रनिर्वृते ॥

~~~~~~~~

781 समे *for* शमे; शोभेछयोः *for* शोभेच्छयोः.
782 उत्तिः *for* ऊतिः.
783 युक्तिः ( *after corr. wrongly* ) *for* मुक्तिः; मुक्तिः ( *before corr.* ) *for* युक्तिः.
784 चितं *for* चिता; छन्ने *for* छन्ने; चुल्लीकायां *for* चुल्लिकायां.
785 साति *for* सातिः; श्रोतं *for* प्रोतं; गुल्मित° *for* गुम्फित°.
786 बुधो *for* बुधो.
787 प्रनं *for* युतं.
788 क्रीडारतो *for* क्रीडारते; स्या *for* स्यात्.
789 स्यात् प्राचिते *for* स्याद्याचिते; जात *for* जातं.
790 धृते *for* धुतं, कत्पिते *for* कम्पिते; पूते *for* वृत्ते; °विनिर्बुधे *for* °निवृते.
~~~~~~~~

**प्राप्ते** समञ्जसावाप्ते **धूते** कम्पिततर्जिते ।
**मूर्तौ** मूर्च्छान्विते व्यक्ते **दीप्तं** दग्धे प्रभास्वरे ॥

**प्रेतो** मृते च भूते च **पोतः** शिशुवहित्रयोः ।
**पीतिस्तुरंगमे** पाने **शितिः** श्वेते च मेचके ॥

**सुतौ** पुत्रमहीपालावेतावागतकर्बुरौ ।
**क्रतुर्मुनौ** च यज्ञे च **ज्ञातिः** पितृसगोत्रयोः ।
**धूर्तौ** कितवधूस्तूरौ **प्राप्तिः** स्याल्लब्धिसिद्धयोः ॥

**कान्तौ** प्रस्तरलोहकौ प्रियधवौ **कान्ते** प्रियङ्गुस्त्रियौ
**केतुश्चिह्नपताकयोश्च** करणे **केतुश्च** शेषग्रहे ।
**अन्तो** नाश[ स ]मीपयोर्निगदितः प्रान्ते स्वरूपेऽप्यसौ
**द** [न्तः] [ *34* ] सानुनिकुञ्जयोश्च दशने **दन्ती** स्मृता चौषधिः ॥

**यन्ता** हस्तिपके सूते **भर्ता** धातरि पोष्टरि ।
**शास्ता** च शासके शुल्के (?) **वप्ता** पितरि वापके ॥

---

*791* घृते *for* धूते; °तर्किते *for* तर्जिते.
*792* मूर्त्तो *for* मूर्तौ; मूर्छान्विते *for* मूर्च्छान्विते; दग्धो *for* दग्धे.
*794* पितिः *for* शितिः.
*795* एताचागत° *for* एतावागत°; कर्वुरौ *for* कर्बुरौ.
*796* योनौ *for* मुनौ.
*797* धूर्त्तौ *for* धूर्तौ; लुब्धि° *for* लब्धि°; °सत्पयोः *for* सिद्धयोः.
*798* प्रियधरौ ( *before corr.* ) *for* प्रियधवौ.
*800* नाशमीपयोः *for* नाशसमीपयोः; प्राते *for* प्रान्ते; स्वरूपेप्यसौ *for* स्वरूपेऽप्यसौ.
*801* द ( *before corr.* ) *for* दन्तः ; दंति *for* दन्ती.
*802* भर्त्ता *for* भर्ता; योष्टरि *for* पोष्टरि.
*803* शांति *for* शास्ता; पावके *for* वापके.

अर्हंस्तु बुद्धे पूज्ये च पतन्पक्षिणि पातुके ।
कुर्वन्कर्मकरे भृत्ये अर्वन्स्यात्कुत्सिताश्वयोः ॥

महद्राज्ये विशाले च गञ्जडुं ? गमशोकयोः ।
पर्वतौ गिरिदेवर्षी संहतौ दृढसंगतौ ॥

प्रहतौ क्षीणव्यासन्नौ विगतौ वीतनिष्प्रभौ ।
द्विजाती विप्रशकुनौ जीवातुर्जायुजीवयोः ॥

स्तिमितो निश्चले क्लिन्ने आदृतः सादरेऽर्चिते ।
गभस्तिः किरणे सूर्ये अगस्तिः पादपे मुनौ ॥

गोदन्तो हरितालेऽपि दंशितो वर्मितेऽपि च ।
संहिता प्रवहिता क्लृप्ता तृणता प्रहृणं द्वयोः ॥

~~~~~~~~

804 अर्हणं तु *for* अर्हंस्तु; वृद्धे *for* बुद्धे; पतत् *for* पतन्; पत्तिके *for* पातुके.

805 कर्म्मकृत *for* कर्मकरे; कुत्स्विताश्वयोः ( *before corr.* ) *for* कुत्सिंताश्वयोः.

806 विषाणे *for* विशाले.

807 गुरूदेवर्षौ ( *before corr.* ) *for* गिरिदेवर्षी; हठ° *for* दृढ°; °संहतौ *for* संगतौ.

808 क्षिण° *for* क्षीण°; °व्याशन्नौ *for* °व्यासन्नौ; विचप्रभौः *for* वीतनिष्पभौ.

809 °जिवनयोः *for* °जीवयोः.

810 तिमिता *for* स्तिमितो; आदरः *f0r* आदृतः; सादरे अर्च्चिते *for* सादरेऽर्चिते.

811 पापये ( *before corr.* ) पादपे.

812 गोदंते *for* गोदन्तो; हरितालेपि *for* हरितालेऽपि; वर्म्मितेपि *for* वर्मितेऽपि.

813 कृसा *for* क्लृप्ता; पहणद्वयोः *for* प्रहृणं द्वयोः.
~~~~~~~~

**प्रसूती** प्रसवोत्पादौ **निकृती** शाठ्यभर्त्सने ।
**दुर्गतिर्**नरके नैःस्व्ये **संततिः** पङ्क्तिगोत्रयोः ॥

**आयतिः** प्रापणे दैर्घ्ये **प्रवृत्तिर्**वृत्तिवार्तयोः ।
**सुव्रता** गौः सुदोहापि **विवृता**न्यागदेऽपि च ॥

**द्रवन्ती** स्यादोषधिश्च **विजाता** सूतिकापि च ।
हसन्त्यङ्गारधानी च **अवन्ती** तु सरित्यपि ॥

**उचितं** न्याय्यमभ्यस्तं **प्रसृतं** स्फुरदुर्गतम् ।
**क्रन्दितं** रुदितेऽऽह्वाने **उषितं** क्षिप्तदग्धयोः ॥

**प्रसूतं** कुसुमे जाते **निमित्तं** हेतुचिह्नयोः ।
**कलिते** स्वीकृतज्ञाते [ **ग्रथित** क्रान्त ? ] गुम्फिते ॥

**अनृतं** कृषावसत्ये स्याद्**इङ्गितं** गतिचेष्टयोः ।
**भाविते** रोपितप्राप्ते **उद्गते** भा[ *35* ]षितोद्गते ॥

---

*814* निकृतिः *for* निकृती; °भत्सने *for* °भर्त्सने.
*815* दुर्गति ( *before corr.* ) *for* दुर्गतिर्; नैःस्वे *for* नैःस्व्ये.
*816* दैर्घे *for* दैर्घ्ये; प्रवृत्ति ( *before corr.* ) *for* प्रवृत्तिर्; वृर्त्तिवार्त्तयोः *for* वृत्तिवार्तयोः.
*817* अन्यागदेपि *for* अन्यागदेऽपि.
*818* द्रवंति *for* द्रवन्ती; *omit* च *after* द्रवन्ती; मृत्तिकापि *for* सूतकापि
*819* अवंत्यु तु *for* अवन्ती तु.
*820* न्यायं *for* न्याय्यं; प्रसूतं *for* प्रसृतं.
*821* ज्ञाने *for* आह्वाने; उष्मितं *for* उषितं; क्षिप्र° *for* क्षिप्त°
*823* °गुल्फीते *for* गुम्फिते.
*824* अनृतां *for* अनृतं; मृषावससत्ये *for* कृषावसत्ये; इंगिते *for* इङ्गितं; ननितेहयोः *for* गतिचेष्टयोः.
*825* लोपित° *for* रोपित°; त्प्राप्ते *for* °प्राप्ते.

स्थापिते निश्चितन्यस्ते वर्धिते दिग्धपूरिते ॥

आयस्तः क्लिशितो जितः प्रतिहतः क्षुब्ध[श्च]कोपान्वितः
अव्यक्तास्त्वपरिस्फुटा इव वचाश्चाव्यक्त ईशः स्मृतः ।
जीमूतो जलदे गिरौ धृतिकरे स्याद्देवताडद्रुमे
आनर्तोऽपि च नृत्यसारिणि ? जले देशप्रभेदे स्मृतः ॥

गरुत्मान्विहगे तार्क्ष्ये विवस्वांस्त्रिदशेश्वरे ।
भगवांस्त्वागते पूज्ये संख्यावान्पण्डिते मिते ॥

धनपती कुबेराढ्यौ वृषपती वृषेश्वरौ ।
हिमाराती रविर्वह्निः प्रजापतिर्नृपो विधिः ॥

समाघातो वधे युद्धे परिघातोऽस्त्रघातयोः ।
पुरस्कृतेऽर्चितान्यूने व्यतीपातोऽक्षययोगयोः ।

---

826 वह्नीते *for* वर्धिते; °पुरिते *for* °पूरिते.

827 क्लिशिते *for* क्लिशितो; जित *for* जितः; प्रतिहत *for* प्रतिहतः; क्षुब्ध *for* क्षुब्धश्च.

828 ईव वच° *for* इव वचा°.

829 भृतिकरे *for* धृतिकरे; स्यादेवता° *for* स्याद्देवताड°.

830 अनार्त्तोपि *for* आनर्तोऽपि; नृत्यसाश्रुणि *for* नृत्यसारिणि.

831 गुरुत्मान् *for* गरुत्मान्; तायार्क्षेः *for* तार्क्ष्ये; विवस्यास्त्रिदशेश्वरे *for* विवस्वांस्त्रिदशेश्वरे.

832 भवणेस्वागते *for* भगवांस्त्वागते; मते *for* मिते.

833 कुवेर° *for* कुबेर°; वृषपति ( *before corr.* ) *for* वृषपती. षनृशरौ *for* वृषेश्वरौ.

834 हिमरोति ( *before corr.* ) हिमाराती; प्रजापति *for* प्रजापतिर्; नृपावधिः *for* नृपो विधिः.

835 समाघाते *for* समाघातो; परिघातोस्त्र° *for* परिघातोऽस्त्र°.

836 पुलचितो *for* पुरस्कृते.

अपाचितिर्व्ययार्चनहानिषु
प्रतिकृतिः प्रतिकारसमानयोः ।
कुहरितं रटिते पिकनिस्वने
परिगतं गतवेष्टितलब्धिषु ॥

॥ तार्थश्लोकः ॥

श्रितं वितन्त्रहस्ते च वादिते च मतेऽपि च? ।
कृतं युगे च पर्याप्ते निष्फले कृतमव्ययम् ।
स्थितमूर्ध्वे गत्यभावे सुप्रतिज्ञे सुनिश्चिते ॥

द्रुतं शीघ्रे विलीने च द्रुतः पलायिते द्रुमे ।
युतं हस्तचतुष्के स्याद्युतं युक्ते युतं पृथक् ॥

ऋतं सत्यमृतं तोयमृतमुञ्छशिलं विदुः ।
प्लुतस्त्रिमात्र उद्दिष्टो मृक्षणोत्पातने प्लुते ॥

---

837 स्वचाचेतिर्विचर्चन° ( *before corr.* ), अपचितिर्विचर्चननिःकृति'° ( *after corr.* ) *for* अपचितिर्व्ययार्चन°.

839 शटिते *for* रटिते; °निःस्वनेः *for* °निस्वने.

840 परितंग *for* परिगतं; गति° (*before corr.*) *for* गत°; °स्नाष्पिपु° *for* °लब्धिषु°.

841 तार्द्धः *for* तार्थश्लोकः.

843 निश्राणे *for* निष्फले.

844 ऊर्द्धे *for* ऊर्ध्वे; यस्वभावे *for* गत्यभावे; स्वप्रतिज्ञे *for* सुप्रतिज्ञे.

846 हचतुष्के ( *before corr.* ) *for* हस्तचतुष्के; स्वतं *for* युतं

847 अंजशिलं *for* उञ्छशिलं.

848 उदिष्टो *for* उद्दिष्टो.

वीतस्त्वसारहस्त्यश्वं शान्तं चाङ्कुशकर्म च ।
ग्रस्तं ग्रासीकृतं ज्ञेयं ग्रस्तं लुप्तपदं वचः ॥ 850

वित्तं विचारिते द्रव्ये ख्या [36] ते वित्तमिष्यते ।
श्वेतं रूप्ये सिते श्वेतं श्वेतश्च पर्वतान्तरम् ॥

वृन्तं प्रसवबन्धे स्याद्घटिधारास्तनाग्रयोः ।
पुस्तं तु पुस्तके प्रोक्तं पुस्तं लेप्यादिकर्मणि ॥

सूतः क्षत्राद्ब्राह्मणीजे तक्ष्णि सारथिबन्दिनोः । 855
लिप्तं च लेपिते भुक्ते लिप्तोऽथ विषदिग्धके ॥

ऋतिर्गतौ घृणायां च स्पर्धायामशुभेऽपि च ।
धाता स्याद्धारकः पोष्टा धातारौ विधिवेधसौ ॥

माता गवि जनन्यां च ब्राह्मण्याद्याश्च मातरः ।
स्वातिर्देवप्रिया ख्याता स्वातिर्नक्षत्रखड्गयोः ॥ 860

---

849 वितः *for* वीतः ; °अस्वं *for* °अश्वं; शांतं *for* शान्तं; चांशकुकर्म्म *for* चाङ्कुशकर्म.

850 ग्रामीकृतं *for* ग्रासीकृतं.

853 वृतं *for* वृन्तं; प्रसवस्के *for* प्रसवबन्धे; स्यात्घटि° *for* स्याद्घटि°.

854 °कर्म्मणि *for* °कर्मणि.

855 सृतः *for* सूतः ; क्षेत्राद् *for* क्षत्राद्; वाह्मणजे *for* ब्राह्मणीजे; तक्षि *for* तक्ष्णि; साराथ° *for* सारथि° ; °वंदिनोः *for* °बन्दिनोः

856 मुक्ते *for* भुक्ते; लिप्तोथ *for* लिप्तोऽथ.

857 गतो *for* गतौ; स्पर्धायां; *for* स्पर्धायां; अशुभेपि *for* अशुभेऽपि

859 जनन्या *for* जनन्यां; वाह्मण्याद्यश्च *for* ब्राह्मण्याद्याश्च.

860 श्वातिः *for* स्वातिः ; श्वातिः *for* स्वातिः ; णक्षत्र° *for* नक्षत्र°

पङ्क्तिः स्याद्दशसंख्यासु श्रेण्यां छन्दान्तरेऽपि च ।
गुप्तिः कारागृहे प्रोक्ता भूगर्ते रक्षणेऽपि च ॥

पत्तिर्गतौ पदातौ च सैन्यभेदे च कीर्तिता ।
गतिर्मार्गदशायात्रासूपाये नाडिकाव्रणे ॥

श्रुतिर्वेदे च कर्णे च श्रोत्रकर्मणि च श्रुतिः ।
स्मृतिरिच्छा स्मृतिर्बुद्धिर्वेदाद्या बोधिका स्मृतिः ॥

यतिः श्लोकपदच्छेदे यतिः कारे? यतिर्यती ।
धृतिर्धैर्ये च योगे च धारणे च सुखेऽपि च ॥

रतिः कामस्त्रियां रागे सुरतेऽपि रतिः स्मृता ।
जातिश्छन्दसि सामान्ये मालतीगोत्रजन्मसु ॥

लूता पिपीलिकायां स्यादूर्णनाभे गदान्तरे ।
पीता स्मृता हरिद्रायां पीतं स्यात्पानगौरयोः ॥

प्रीतिश्चन्द्रार्कयोर्योगे प्रीतिः प्रेमप्रमोदयोः ।
ईतिः स्यादतिवृष्ट्या[37]दौ दैवोत्पाते प्रवासने ॥

---

861 छंदांतरेपि *for* छन्दान्तरेऽपि.
862 भूगर्त्ते *for* भूगर्ते; रक्षणेपि *for* रक्षणेऽपि.
863 पक्तिः *for* पत्तिः; कीर्त्तिता *for* कीर्तिता.
865 श्रोत्रिकर्मणि *for* श्रोत्रकर्मणि.
866 इष्टा *for* इच्छा; वुद्धिः *for* बुद्धिः.
867 °छेद *for* °च्छेदे; भित्तिकाध्वे *for* यतिः कारे.
868 मुखेपि *for* सुखेऽपि.
870 जातिः *for* जातिश्; मामाज्ये *for* सामान्ये; °यन्मसु *for* °जन्मसु.
871 स्यात् *for* स्याद्; ऊर्णलभे *for* ऊर्णनाभे.

हेतिः सूर्यस्य वह्नेश्च भासि हेतिस्तथायुधे ।
गर्तस्त्रिगर्तदेशे स्याद्गर्तो भूमिविलेऽपि च ॥

शान्तो रसान्तरे ? दान्ते शान्तोऽतिमुक्तपादपः ।
सेतुर्वरुणवृक्षे स्यात्सेतुरालौ प्रकीर्तितः ॥

तिक्तो रसे पर्पटिकौषधौ च
तिक्तं सुगन्धे कटुका च तिक्ता ।
सितो निरुद्धे धवले समाप्ते
ज्ञाते सिता स्यादशुचप्रकारे ॥

श्रीमांस्तु धनिके रम्ये तिलकाख्ये च पादपे ।
पृषन्मृगे पृषद्बिन्दौ पृषतोऽप्यनयोर्मतः ।

पित्सन्पिपतिषश्चैव पतनेच्छौ विहंगमे ।
हरित्ककुभि वर्णे च तृणवाजिविशेषयोः ॥

---

875 हेति *for* हेतिः ; आउधे *for* आयुधे.

876 गर्त्तास्त्रीगर्त्त° *for* गर्तस्त्रिगर्त° ; गत्तो *for* गर्तो; भूमिविलेषु *for* भूमिविलेऽपि.

877 भवान्वे *for* रसान्तरे; शांतोतिमुक्तपादयः *for* शान्तोऽविमुक्तपादपः.

878 वरण° *for* वरुण° ; स्या *for* स्यात् ; सेतुवालौ *for* सेतुरालौ; प्रकी-र्त्तितः *for* प्रकीर्तितः.

880 रिक्तं *for* तिक्तं; रिक्ता *for* तिक्ता.

881 सितोऽनिरुद्धे *for* सितो निरुद्धे.

883 तिलकाक्षे *for* तिलकाख्ये.

884 पृषत *for* पृषन् ; पृषत्विंदौ *for* पृषद्बिन्दौ; पुषतोपि *for* पृषतोऽपि; म्मतः *for* मतः.

885 पिषन् ( *before corr.* ) पित्सन् ; पिपतीषं चैव *for* पिपतिषश्चैव; पतनेछौ *for* पतनेच्छौ.

886 कुकुंति *for* ककुभि; कर्णे *for* वर्णे.

**रजत**मवदाते स्याद्**रजतं** हाररुप्ययोः ।
**ज्वलितं** तु दीप्तमिव स्मृतं दग्धे प्रभास्वरे ॥

**सुकृतं** शोभनं कर्म पुण्यं च **सुकृतं** मतम् ।
**पलितं** कर्दमे तापे पाण्डुकेशे च शैलजे ॥

**सुरतं** स्यान्निधुवनं देवत्वं **सुरता** स्मृता ।
**मुषितं मूषितं** चेति उभे खण्डितचोरिते ॥

**सूनृतं** प्रियसत्यर्थे भाषणे **सूनृतं** शिवे ।
**प्रार्थितं** शत्रुणा रुद्धे याचिते **प्रार्थितं** विदुः ॥

**उच्छ्रितं** स्यात्समुन्नद्धे तथा जातप्रवृद्धयोः ।
**उद्धृतं** स्यादुन्मूलितं स्याद्भुक्तोज्झित**मुद्धृतम्** ॥

**उद्यतं** स्यादुन्मनसि प्रोच्यते वृद्धिमत्यपि ।
**पिण्डितं** स्यात्संकलितं संख्यातं निविडीकृतम् ॥

---

887 °कुप्ययोः *for* °रुप्ययोः.

888 ज्वलितन्तु *for* ज्वलितं तु; दुग्धे *for* दग्धे.

889 कर्म्म *for* कर्म.

890 नापे *for* तापे.

891 निधुवणं *for* निधुवनं.

892 सुषितं ( *before corr.* ) *for* मुषितं; मुषितं ( *before corr.* ) *for* मूषितं; खंडीत° ( *before corr.* ) *for* खण्डित°.

893 °मत्यर्थे *for* °सत्यर्थे; शुनृतं *for* सूनृतं.

894 शक्रुणा *for* शत्रुणा.

895 उछ्रितं *for* उच्छ्रितं; समुन्नद्धे; *for* समुन्नद्धे; °प्रवुद्धयोः *for* °प्रवृद्धयोः.

897 ऊक्तल्तिः *for* उद्यतं.

898 पंडितं ( *before corr.* ) *for* पिण्डितं; निविडीक्रृतं *for* निविडीकृतं.

उत्थितं प्रोद्यते जाते वृद्धियुक्ते प्रकीर्तितम् ।
[38] अर्दितं हिंसितं प्रोक्तं वातव्याधौ च याचिते ॥

वेल्लितं कुटिले प्रोक्तं वेल्लितं कलितं प्लुतम् ।
अक्षतं चापि लाजेषु चाक्षतं स्यादखण्डितम् ॥

वापितं मुण्डितं प्रोक्तं बीजाकृतं च वापितम् ।
जृम्भितं करणे स्त्रीणां जृम्भितं स्फुटितेहयोः ॥

पीडितं योषित्करणे यन्त्रिते बाधितेऽपि च ।
वेष्टितं लासिके रुद्धे स्त्रीणां च करणान्तरे ॥

पर्याप्तं च यथेष्टं स्याच्छक्ते तृप्तौ निवारणे ।
प्रतीतं ज्ञातविख्यातहृष्टेषु त्रिषु विश्रुतम् ॥

दुर्जातं व्यसने ज्ञेयमसम्यग्जातवस्तुनि ।
निशान्तं भवने शान्ते प्रत्युषे च प्रयुज्यते ॥

---

*899* उद्गूतं *for* उत्थितं; प्रकीर्त्तितं *for* प्रकीर्वितं.
*900* अंगितं *for* अर्दितं.
*901* विल्लितं *for* वेल्लितं; वैल्लितं *for* वेल्लितं; *omit* कल्लितं.
*902* अद्वतं *for* अक्षतं.
*903* वीजाकृतं *for* बीजाकृतं.
*905* योषितं करणे *for* योषित्करणे; राधितेपि *for* बाधितेऽपि.
*906* नासिके *for* लासिके.
*907* स्याछक्ते *for* स्याच्छक्ते.
*908* प्रतिज्ञांत॰ *for* प्रतीतं ज्ञात॰ ; ॰विख्यातापिष्टेषु *for* ॰विख्यातहृष्टेषु.
*909* दुर्ज्जातं *for* दुर्जातं.

**कापोतम**ञ्जने सर्जीक्षारे कपोतसंहतौ ।
**आध्मातं** शब्दिते दग्धे वातव्याधौ च कीर्तितम् ॥

**पर्याप्तिः** स्यात्परित्राणे प्राप्तिप्रकामयोरपि ।
**संवित्तिः** प्रतिपत्तिः स्यात्**संवित्ति**रविवादितः ॥

**सुनीति**र्ध्रुवमाता स्यान्नीतिश्चापि सुशोभना ।
**निर्वृतिः** स्यादन्तमये स्वस्थतायां च **निर्वृतिः** ॥

**पक्षतिः** स्याद्गरुन्मूले **पक्षतिः** प्रतिपत्तिथौ ।
**उन्नति**रुदये वृद्धौ गरुडस्य स्यादतिप्रिया ॥

**संमतिः** स्यादनुज्ञायामभिलाषोऽपि **संमतिः** ।
**प्रकृतिः** सहजे योनावमात्ये परमात्मनि ॥

**समितिः** संगमे युद्धे सभायां **समितिः** स्मृता ।
**वसति**र्वेश्मयामिन्यो**र्वसतिः** स्यादवस्थितिः ॥

---

911 कापौतं *for* कापोतं; अंञ्जने *for* अञ्जने; सज्जीक्षिरे *for* सर्जीक्षारे.
912 आध्यातं *for* आध्मातं; शब्दिते *for* शब्दिते; दग्धो *for* दग्धे. किर्त्तितं *for* कीर्तितं.
913 प्रातिःप्रकाशयोः *for* प्राप्तिप्रकामयोः.
914 अपिवादितः *for* अविवादिता.
915 स्यान्वितिः *for* स्यान्नीतिः.
916 निवृत्तिः *for* निर्वृतिः.
917 स्याक्षरुन्मूले *for* स्याद्गरुन्मूले; पक्षितिः *for* पक्षतिः.
918 गरुडस्यादतिप्रिया *for* गरुडस्य स्यादतिप्रिया.
919 अभिलाषोपि *for* अभिलाषोऽपि.
920 अमात्मे *for* अमात्ये.
921 समतिः *for* समितिः; स्मृताः *for* स्मृता.
922 वेस्म° *for* वेश्म°.

अदितिः सुरमाता [ 39 ] स्याददितिः पृथिवी मता ।
**पञ्चता** मरणे भावे पञ्चानां च प्रकीर्तिता ॥

**विनता** तार्क्ष्यमाता स्यान्नम्रा च **विनता** मता ।
**हरिता** च स्मृता दूर्वा **हरितो** वर्णवाचकः ॥

**सिकता** वालुकायां स्याद्देशे च सिकतान्विते ।
**महती** नारदी वीणा महत्त्वेनान्विता च या ॥

**जगती** छन्दसो भेदे पृथिव्यां विष्टपे जने ।
**रेवती** हलिपत्न्यां स्यादृक्षभेदे च मातरि ॥

**किराती** किरातस्त्री स्याद्या च चामरधारिणी ।
**जीवन्ती** कथिता वृन्दा जीवमाना गुडूचिका ॥

**वासन्ती** पाटला यूथी अतिमुक्ता च कीर्तिता ।
**भरतो** राजविशेषे च नटे रामानुजेऽपि च ॥

---

*923* पृथवी *for* पृथिवी.
*924* प्रकीर्त्तिता *for* प्रकीर्तिता.
*926* दुर्वा *for* दूर्वा.
*927* स्यादेशे *for* स्याद्देशे.
*928* पा *for* या.
*929* पितपे *for* विष्टपे.
*930* वृद्धभेदे *for* ऋक्षभेदे.
*931* याश्च *for* या च; चामरधारिणि *for* चामरधारिणी.
*932* वंदा *for* वृन्दा.
*933* पृथ्वी *for* यूथी; अभियुक्ता *for* अतिमुक्ता.
*934* *add* च *after* राजविशेषे.

**विकृतं** स्यात्तु बीभत्सेऽसंस्कृते व्याधिमत्यपि ।
**हृषितः** प्रणते प्रीते वर्मिते हृष्टरोमणि ॥

**निकृतः** स्याद्विप्रकृतो **निकृतो** विप्रलब्धकः ।
**अजितो** वासुदेवः स्याद**जित**श्चापराजितः ॥

**गोपतिः** शंकरे षण्डे भास्करे पार्थिवेऽपि च ।
**निर्ऋति**श्चापि दिक्पाले अलक्ष्म्यां निरुपद्रवे ॥

**क्षारितः** प्राचितः क्षारैरभिशस्तः प्रकीर्तितः ।
**संस्कृतो** भूषिते शस्ते कृत्रिमे लक्षणान्विते ॥

**गर्जितो** मत्तमातङ्गे **गर्जितं** घननिःस्वने ।
**व्यायतो** व्यापृते दीर्घे **व्यायत**श्च दृढे भृशे ॥

---

935 वीभस्तं चा संस्कृते *for* बीभत्सेऽसंस्कृते.
936 कृषितः *for* हृषितः ; प्रतते *for* प्रणते; पीते *for* प्रीते; कृष्णरोमनि रोमनि *for* हृष्टरोमणि.
937 निःकृतं *for* निकृतः ; विप्रलब्धकः *for* विप्रलब्धकः .
938 वाशुदेवः *for* वासुदेवः .
939 शंडये *for* षण्डे; पार्थिवेपि *for* पार्थिवेऽपि.
940 निरतिः *for* निर्ऋतिः ; दिग्पाले *for* दिक्पाले; अलक्षां *for* अलक्ष्म्यां.
941 क्षयितः *for* क्षारितः ; अभिरस्तः *for* अभिशस्तः ; प्रकीर्त्तितः *for* प्रकीर्तितः .
942 शंस्कृते *for* संस्कृतो; कृतिमे *for* कृत्रिमे.
943 मंत° *for* मत्त° .
944 व्यापतो *for* व्यायतो, व्यपेतः *for* व्यायतः ; भृसे *for* भृशे;

रैवतः कथितो रुद्रे दैत्यपर्वतभेदयोः ।
निवातो दृढसंनाहे निर्वाते चाश्रयेऽपि च ॥

कपोतः कवकः प्रोक्तः सज्यां ? पारावतेऽपि[40]च ।
परेतो भूतभेदः स्यात्परेतो मृत उच्यते ॥

प्रणीतः संस्कृते वह्नौ विहितेऽथ प्रवेशिते ।
संघातः कथितः संघः संघातो नरकान्तरम् ॥

उन्मत्तोऽविनयश्चेष्टो धूस्तूरश्च प्रकीर्तितः ।
संवर्तः प्रलये प्रोक्तस्तथा बिभीतकद्रुमः ॥

उदात्तः स्वरभेदे स्यात्काव्यालंकारकृत्ययोः ।
त्रिगर्तः स्याज्जनपदे त्रिगर्ता घुर्घुरी स्मृता ॥

विश्वस्तो विश्वासयोग्यो विश्वस्ता विधवा मता ।
आस्फोतश्चार्कपर्णे स्यादास्फोता वनमालिका ॥

---

945 रूद्रे *for* रुद्रे.

946 दृढस्वप्याहे *for* दृढसंनाहे; चाश्रमेपि *for* चाश्रयेऽपि.

947 करकः *for* कवकः ; पद्मां *for* सज्यां; पारावतेपि *for* पारावतेऽपि; *omit second* पि.

948 प्रणितः *for* प्रणीतः ; विनीतेथ *for* विहितेऽथ.

951 उन्मत्तोविनयः *for* उन्मत्तोऽविनयः ; प्रकीर्त्तितः *for* प्रकीर्तितः.

952 संवर्त्तः *for* संवर्तः.

954 त्रिगर्त्तः *for* त्रिगर्तः ; स्यान्ननपदे *for* स्याज्जनपदे; त्रिगर्त्ता *for* त्रिगर्ता.

956 नवमालिका *for* वनमालिका.

वृत्तान्तः स्यात्प्रकरणे कात्स्न्र्यवार्त्ताप्रकारयोः ।
दृष्टान्तः कथितो धीरैरुदाहरणशास्त्रयोः ॥

उद्दान्तः स्यात्समुद्गीर्णे उद्दान्तो निर्मदो गजः ।
कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ॥

शकुन्तः पक्षिभेदे स्याच्छकुन्तः पक्षिभासयोः ।
निर्मुक्तः संगसंत्यक्तः सर्पश्च मुक्तकञ्चुकः ।
आघ्रातः शिङ्घिते ज्ञेय आक्रान्ते च प्रयुज्यते ॥

अनन्ता दूर्वायां भुवि च हरिणीशारिविकयो-
रनन्ता नागेशानवधिहरयोऽनन्तमपि खम् ।
निरस्तो निच्यूते त्वरितवचनं क्षिप्तशरयो-
र्निरस्तः संत्यक्ते प्रतिहतबले चापि गदितः ॥

~~~~~~~~~~

957 °वार्त्तो° *for* °वार्त्ता° .

959 समुद्रिर्णे *for* समुद्गीर्णे; उद्दातो *for* उद्दान्तो.

960 मय° *for* यम° ; °कर्म्मसु *for* °कर्मसु.

961 स्याछकुंतः *for* स्याच्छकुन्तः .

962 मुक्तकंजकः *for* मुक्तकञ्चुकः .

963 शिघ्रिते *fcr* शिङ्घिते.

964 दुर्वायां *for* दूर्वायां; श्रुवी *for* भुवि.

965 °अनरधि° *for* °अनवधि°; °दुरयः *for*° हरयः .

966 निच्युते *for* निच्यूते.

967 प्रतिहतिवले *for* प्रतिहतबले.
~~~~~~~~~~

आयुष्मानपि दीर्घायुर्ग्रहयोश्च प्रकीर्तितः ।
द्वीपवांस्तु नदे सिन्धौ द्वीपवत्यवनिर्नदी ॥

भोगवती च नागानां नदी च नगरी तथा ।
हैमवती स्मृता गङ्गा स्वर्णक्षीरी तथाभया ॥

कु [41] मुद्वती कुशपत्नी कुमुदिन्यां कुमुद्वती ।
शुभदन्ती सार्वभौमदिग्गजा सुदती च या ॥

पारावती तु गोपानां गीते पारावतः खगः ।
समुद्रान्ता तु कार्पासी पृक्का चापि दुरालभा ॥

प्रधूपिता क्लेशिता स्याद्दिशं यास्यति यां रविः ।
अनुमतिस्त्वनुज्ञा स्यात्पूर्णेन्दुः पूर्णिमा च या ॥

निराकृतिः प्रतिक्षेपेऽप्यस्वाध्यायेऽप्यनाकृतौ ।
उपसत्तिस्तु सेवायां संगमात्रे च कीर्तिता ॥

---

*968* आयुष्माण *for* आयुष्मानपि; दीर्घायु॰ *for* दीर्वायुर्; प्रकीर्त्तितः *for* प्रकीर्तितः

*969* द्वीपवास्तु *for* द्वीपवांस्तु; मदे *for* नदे; सिद्धौ *for* सिन्धौ; द्विपवती *for* द्वीपवती.

*973* स्वदती *for* सुदती.

*975* पृथका *for* पृक्का; वाल्ता *for*. दुरालभा.

*976* स्यादिशं *for* स्याद्दिशं; वरिः *for* रविः.

*978* प्रतिक्षेपेस्वप्रध्यायेप्यनाकृतौ *for* प्रतिक्षेपेऽप्यस्वाध्यायेऽप्यनाकृतौ.

*979* कीर्त्तिता *for* कीर्तिता.

**अभिशस्ति**र्याच्ञायामभिशापे च कीर्तिता ।
**सदागतिः** स्मृतो वाते **सदागतिः** सदीश्वरे ॥

**समुन्नतः** समुन्नद्धे तद्भेदे च **समुन्नतः** ।
**निष्कासितो** निर्गमितो धिक्कृतश्च प्रकीर्तितः ॥

**उद्दास्थितः** प्रतीहारे चरभेदे च कीर्तितः ।
**पाशुपतो** वकपुष्पे कस्मिंश्चिच्छिवलिङ्गिनि ॥

**पुरस्कृतो** रिपुग्रस्ते पुरोन्यस्तेऽभिपूजिते ।
**उपाहितो**ऽनलोत्पात आरोपित **उपाहितः** ॥

**अपावृतः** स्वतन्त्रः स्यात्पिहितश्चाप्य**पावृतः** ।
**उपाकृतः** समानीते यज्ञार्थं च हते पशौ ।
**अवदातः** सिते पीते परिशुद्धप्रधानयोः ॥

---

980 याचश्रायां *for* याच्ञायां; कीर्त्तिता *for* कीर्तिता.
981 स्मृते *for* स्मृतो.
982 समुन्नद्धस् *for* समुन्नद्धे; स्तच्चभेदे *for* तद्भेदे.
983 निस्कासितो *for* निष्कासितो; निकामितो *for* निर्गमितो; धिक्नतः *for* धिक्कृतः; प्रकीर्त्तितः *for* प्रकीर्तिता.
984 रतभेदे *for* चरभेदे; कीर्त्तिताः *for* कीर्तितः.
985 वकप्पुष्पे *for* वकपुष्पे; कस्मिश्चिछिव° *for* कस्मिंच्छिव°.
986 पुरिस्थितो *for* पुरस्कृतो; विप्रग्रस्ते *for* रिपुग्रस्ते.
987 उपाहितोनलोत्पात *for* उपाहितोऽनलोत्पात.
989 उपातः *for* उपाकृतः; समानीते *for* समानीते; यज्ञार्थश्च *for* यज्ञार्थं च.
990 सीते *for* सिते.

पारिजातः कल्पतरौ पारिभद्रतरावपि ।
अभिनीतः स्मृतो न्याय्ये संस्कृतेऽमर्षवत्यपि ॥

अधिक्षिप्तः प्रणिहिते भर्त्सिते च प्रयुज्यते ।
अपध्वस्तः परित्यक्ते निन्दिते चावचूर्णिते ॥

चित्रगुप्तो यमः प्रोक्तो लेखकश्च प्रकीर्तितः । 995
अतिमुक्तस्तु निःसंगे वासन्त्यां ति [ 42 ] निशेऽपि च ॥

अभियुक्तः परै रुद्धो अभियुक्तश्च तत्परः ।
उपरक्तो व्यसनार्ते राहुग्रस्तेन्दुसूर्ययोः ॥

नन्द्यावर्तः पुमान्वेश्मप्रभेदे तगरद्रुमे ।
दिवाकीर्तिस्तु चाण्डाले दिवाकीर्तिस्तु नापितः ॥ 1000

धूमकेतुः कृशानौ स्यादुपप्लवे च कीर्तितः ।
लक्ष्मीपतिर्वासुदेवे भूमिपाले च कीर्तितः ॥

---

*992* अभिनितः *for* अभिनीतः ; न्याये *for* न्याय्ये; सस्कृते *for* संस्कृते;

*993* अभिक्षितः *for* अधिक्षिप्तः .

*994* वारचुर्णिते *for* चावचूर्णिते.

*995* प्रकीर्त्तितः *for* प्रकीर्तितः .

*996* अभिमुक्तः *for* अतिमुक्तः ; निःसंके *for* निःसंगे; तिविशेपि *for* तिनिशेपि.

*997* अभिसुक्तः *for* अभियुक्तः ; परे *for* परै; अभिसुक्तः *for* अभियुक्तः .

*998* व्यसनार्त्ते *for* व्यसनार्ते.

*999* नंदावर्त्तः *for* नन्द्यावर्तः ; वेस्म° *for* वेश्म° .

*1000* दीराकीर्त्तिः *for* दिवाकीर्तिः ; दीवाकीर्त्तिः *for* दिवाकीर्तिः .

*1001* कीर्त्तितः *for* कीर्तितः .

*1002* लक्ष्मिपतिः *for* लक्ष्मीपतिः ; कीर्त्तितः *for* कीर्तितः .

**वनस्पति**र्वृक्षमात्रे विना पुष्पं फलद्रुमे ।
**पुष्पदन्त**स्तु दिङ्नागनागविद्याधरान्तराः ॥

**चन्द्रकान्तो** दृषद्भेदे **चन्द्रकान्त**श्च कैरवे ।
**कलधौतं** सुवर्णे स्याद्रजते च प्रकीर्तितः ॥

**प्रतिक्षिप्तं** प्रहिते च **प्रतिक्षिप्तं** निराकृते ।
**अभिजातः** कुलीने स्यान्न्याय्यपण्डितयोरपि ॥

**अवगीतं** मुहुर्गीते अत्यर्थं जनगर्हिते ।
**अङ्गारितं** पलाशीयकुसुमोद्गमदग्धयोः ॥

**अत्याहितं** महाभीतिः कर्म जीवानपेक्षि च ।
**अन्तर्गतं** वदन्त्यार्या मध्यप्राप्तं च विस्मृतम् ॥

**उल्लिखितं** समुत्कीर्णे **उल्लिखितं** तनूकृतम् ।
**प्रणिहितं** तु संप्राप्ते न्यस्ते समाहिते तथा ॥

**अवसित**मृद्धे ज्ञाते अवसानं गतेऽपि च ।
**उपचितं** तु समृद्धे स्याद्दिग्धे चोत्पतितेऽपि च ॥

---

1003 पुष्प *for* पुष्पं; लमेद्रुमे *for* फलद्रुमे.
1004 दिग्नाग° *for* दिङ्नाग° .
1006 कलाधौतं *for* कलधौतं; राजते *for* रजते; प्रकीर्त्तितः *for* प्रकीर्तितः .
1008 स्या *for* स्यान् ; न्याय° *for* न्याय्य° .
1009 गिते *for* गीते; अत्यर्थ *for* अत्यर्थं.
1010 पलासीय° *for* पलाशीय° ; कुसुमोकुसु° *for* कुसुमोद्गम° .
1011 अत्यहितं *for* अत्याहितं; कर्म्म *for* कर्म.
1012 मध्यप्राप्तश्च *for* मध्यप्राप्तं च.
1015 अवहितं वृद्धि *for* अवसितमृद्धे; गतेपि *for* गतेऽपि.

आच्छुरितं स्मृतं हास्ये स्वशब्दनखवादने ।
वसन्तदूतशब्दाः स्युश्चूतातिमुक्तपाटलाः ॥

मूर्धाभिषिक्तो भूपाले प्रधाने क्षत्रियेऽपि च ।
यादसांपतिरम्भोधिः प्रचेता यादसांपतिः ॥

[ 43 ] गणाधिपतिरित्येष शिवे विनायकेऽपि च ।
उपधूपित आसन्नमरणे परिधूपिते ।
स्यादवलोकितं दृष्टं जिनः स्यादवलोकितः ॥

॥ तश्लोकः ॥

सन्नित्यर्चिते साधौ विद्यमानप्रशस्तयोः ।
सती पतिव्रता स्त्री स्यात्सती गौरी च कीर्तिता ॥

वार्त्तं फल्गुन्यरोगे स्यादारोग्ये वृत्तिमत्यपि ।
वार्त्तं तु वर्तनोदन्ते वार्ता कृषिकृतौ तथा ॥

---

*1017* आछुरितं *for* आच्छुरितं; विस्मृतं *for* स्मृतं; नूखवादने *for* नखवादने.

*1018* वदंतोदूत॰ *for* वसन्तदूत॰; ॰संगाः *for* ॰शब्दाः; स्युःश्चुनानि॰ *for* स्युश्चूताति॰; ॰पिक॰ *for* ॰मुक्त॰.

*1019* भूपालो *for* भूपाले.

*1021* विनायकेपि *for* विनायकेऽपि.

*1022* तपधूपित *for* उपधूपित.

*1023* अवकलितं *for* अवलोकितं; जीनः *for* जिनः.

*1025* अर्द्धिते *for* अर्चिते; ॰प्रसस्तयोः *for* ॰प्रशस्तयोः.

*1026* जतीव्रता *for* पतिव्रता; कीर्त्तिता *for* कीर्तिता.

*1027* फल्गुणि *for* फल्गुनि; आरोग्य *for* आरोग्ये.

*1028* वार्त्ता *for* वार्त्ते; वर्त्तनौदले *for* वर्तनोदन्ते.

**वृत्तं** दृढमधीतं च **वृत्तं** वृत्तौ मृतेऽपि च ।
चरित्रच्छन्दसोर्**वृत्तं** वर्तनातीतयोरपि ॥

**भूतं** क्ष्मादौ पिशाचादौ न्याय्ये जन्तूपमानयोः ।
**भूतं** प्राप्तेऽपि वृत्ते च देवयोन्यन्तरेऽपि च ॥

**रक्तं** क्षतजकाश्मीरलोहितेषु प्रयुज्यते ।
नील्यादिरञ्जिते शुद्धे **रक्तं रक्तो**ऽनुरागिणि ॥

**हस्तः** पाणौ च ऋक्षे च केशौघे केशपूर्वकः ।
**हस्तो** गजस्य नासायां शुण्डार्थे स्थूलपूर्वकः ॥

**धातुः** श्लेष्मादिरूप्यादिपृथ्व्यादिचक्षुरादिषु ।
मनःशिलादिभूवाद्योर्विशेषादस्थ्नि गैरिके ।

**क्षत्ता** शूद्रात्क्षत्रियाजे सारथिप्रतिहारयोः ।
स्मृतः प्रेष्यासुते **क्षत्ता क्षत्ता** नियुक्तवेधसोः ॥

---

*1029* मृतेपि *for* मृतेऽपि.

*1030* चरीत्र° *for* °चरित्र° ; °छंदशो *for* °च्छन्दसोर् ; वर्त्तन° *for* वर्तन°.

*1032* प्राप्तेति *for* प्राप्तेऽपि; योन्यंतरेपि *for* योन्यन्तरेऽपि.

*1033* रक्त *for* रक्तं; °काश्मिर° *for* °काश्मीर° .

*1034* नील्यांदि° *for* नील्यादि° ; रक्तौपरागिनि *for* रक्तोऽनुरागिणि.

*1036* शुश्वोर्द्धे *for* शुण्डार्थे; स्तूलपूर्वकः *for* स्थूलपूर्वकः.

*1037* धातु *for* धातुः ; °पृथ्यादि° *for* °पृथ्व्यादि° .

*1038* मनःशीलादि° *for* मनःशिलादि° ; °भूपाद्योः *for* °भूवाद्योः ; अस्त्रि *for* अस्थ्नि.

*1039* धर्त्ता *for* क्षत्ता; °क्षत्रियजे *for* °क्षत्रियाजे.

*1040* लात्ता ( *before corr.* ) धर्त्ता धर्त्ता ( *after corr.* ) *for* क्षत्ता क्षत्ता; निर्म्मुक्त° *for* नियुक्त°; °वेधसौ *for* °वेधसोः.

वृत्तिः प्रवर्तने ख्याता विवृतौ जीवनेऽपि च ।
कौशिकीभारतीत्यादौ नाट्यवृत्तौ च दृश्यते ॥

वर्तिरौषधिनिर्माणं गात्रानुलेपने स्मृता ।
दीपे दीपदशायां च वर्तिशब्द उदाहृतः ॥

रीतिर्दग्धसुवर्णादिमले स्यादारकूटके ।
प्रचारे च प्रतिस्यन्दे रीतिशब्दः प्रयुज्यते ॥

लता व्रततिमाधव्योर्लता प्रियङ्गुशाखयोः ।
लता दूर्वा च पृक्का च लता ज्योतिष्मती स्मृता ॥

[ 44 ]शुक्तिः सुगन्धे नखनाम्नि मुक्तास्फोटे च शुक्तिर्नयनक्ष्मणे च ।
दुर्नामिकायामपि शुक्तिरुक्ता शङ्खे स्मृता शङ्खनखेऽपि शुक्तिः ॥

---

*1041* प्रवत्तते *for* प्रवर्तने; विधृतो *for* विवृतौ; जीवनेपि *for* जीवनेऽपि.
*1042* कौषिकी *for* कौशिकी.
*1043* वर्तिः कौषधि° *for* वर्तिरौषधि°; °निर्म्माणं *for* °निर्माणं.
*1044* वर्त्तिशब्दः *for* वर्तिशब्दः.
*1045* वीतिः *for* रीतिः; °सुवर्णादी° *for* °सुवर्णादि°; माल्ये *for* मले; आरकूटयोः *for* आरकूटके.
*1046* वीतिःशब्द *for* रीतिशब्दः.
*1047* °माधाव्योः *for* °माधव्योः; प्रियंकु° *for* प्रियङ्गु°; °शास्वयोः *for* °शाखयोः.
*1048* ज्योतिस्मती *for* ज्योतिष्मती.
*1049* मुक्तास्फोटै *for* मुक्तास्फोटे; नपलक्ष्मणे *for* नयनक्ष्मणे.
*1050* दुर्म्मक्षिकायां *for* दुर्नामिकायां; शंखे *for* शंखे; शंखनखेपि *for* शंखनखेऽपि.

**सीता** नभःसरिति लाङ्गलपद्धतौ च
**सीता** दशाननरिपोः सहधर्मिणी च।
**सीतं** स्मृतं हिमगुणे च तदान्विते च
**सीतोऽलसे** च बहुवारतरौ च दृष्टः ॥

**बृहती** क्षुद्रवार्ताकी **बृहती** कण्टकारिका।
वाचि छन्दसि च ज्ञेया महत्यां **बृहती** तथा ॥

**आयत्तिः** शयने दैर्घ्ये प्रभावागामिकालयोः।
मर्यादायां तथा स्नेहे वशित्वे वासरे बले ॥

**वनिता** जनितात्यर्थरागयोषिति योषिति।
**वनितं** याचितं ज्ञेयं **वनितं** सेवितं मतम् ॥

**वासिता** स्त्री करिणी स्याद्वा**सितं** सुरभीकृतम्।
ख्याते ध्वाने ज्ञानमात्रे **वासितं** वस्त्रवेष्टितम् ॥

---

*1051* शीता *for* सीता.

*1052* शीता *for* सीता; सहधर्म्मिणी *for* सहधर्मिणी.

*1053* शीतं *for* सीतं.

*1054* शीतोलशे *for* सीतोऽलसे; वहुवारहरौ *for* बहुवारतरौ.

*1055* वृहती *for* बृहती; क्षुद्रवार्त्ताकी *for* क्षुद्रवार्ताकी; वृहती *for* बृहती.

*1056* वृहती *for* बृहती.

*1057* आयतिः *for* आयत्ति; दैर्घे *for* दैर्घ्ये; प्रभारा° ( *before corr.* ) *for* प्रभावा°.

*1058* स्नेरहे ( *before corr.* ) *for* स्नेहे; वसित्वे *for* वशित्वे; वासवे *for* वासरे; वने *for* बले.

*1061* करिण्यः *for* करिणी.

*1062* वसुवेष्टितं *for* वस्त्रवेष्टितं.

**प्रसृतो**ऽर्धाञ्जलौ ज्ञेयः **प्रसृतो**ऽपि च वेगिते ।
**प्रसृता** तु मता जङ्घा विनीतः **प्रसृतो** मतः ॥

**स्थपति** संस्मृतो योऽसौ गीष्पतिक्रतुयाजकः ।
प्रासादादिकरः शिल्पी **स्थपतिः** कञ्चुकी तथा ॥

**शुद्धान्त**श्च विशुद्धान्तः **शुद्धान्ता** राजयोषितः ।
कक्षान्तरे च **शुद्धान्तो** नृपस्यासर्वगोचरे ॥

**जयन्तः** कथितो रुद्रे **जयन्तः** पाकशासनिः ।
**जयन्ती** वृक्षभेदे स्याज्जययुक्ता च कीर्तिता ॥

**उद्घातः** कथितो धीरैः स्खलिते समुपक्रमे ।
मरुतोऽभ्यासयोगाय कुम्भकादित्रयेऽपि सः ॥

**विविक्तं** रहसि ख्यातमसंपृक्तपवित्रयोः ।
विवेकसहि[*45*]ते पुंसि **विविक्तः** सद्भिरिष्यते ॥

---

*1063* अर्द्धांजलौ *for* अर्धाञ्जलौ; विश्व° *for* ऽपि च.
*1064* मृतः *for* मतः.
*1065* स्थुपतिः *for* स्थपतिः; योसौ *for* योऽसौ; गीप्पतिः *for* गीष्पति°; °जायकः *for* °याजकः.
*1066* प्रसादादि° *for* प्रासादादि°; स्थुपतिः *for* स्थपतिः.
*1067* विशुद्धान्ति ( *before corr.* ) विशुद्धान्तः.
*1068* कृक्षान्तरे *for* कक्षान्तरे; *Add* च *after* कक्षान्तरे.
*1070* कीर्त्तिता *for* कीर्तिता.
*1071* उद्धातः *for* उद्घातः; सवलीते *for* स्खलिते.
*1072* मरुतोभ्यासा° *for* मरुतोऽभ्यास°; °त्रयेपि *for* °त्रयेऽपि.
*1073* रहसी *for* रहसि; °परित्रयोः *for* °पवित्रयोः.

विनीतमुपनीतं स्यादपनीते जितेन्द्रिये ।
वाणिजे निभृते चैव विनीतः सुवहे हये ॥

आचितः शकटोन्मेये पलानामयुतद्वये ।
छन्ने च संगृहीते च आचितः समुदाहृतः ॥

... .... ... ...
... ... .... ... ।
भारती भगवती सरस्वती
भारती वचनमात्रमुच्यते ॥

रोहितो हरिणमीनभेदयोः
प्लीहशत्रुविटपी च रोहितः ।
रोहितं तु ऋजुशक्रकार्मुके
कुङ्कुमे सृजि च रोहितं स्मृतम् ॥

लोहिते रुधिरकुङ्कुमे स्मृते
लोहितौ नदविशेषभूमिजौ ।
लोहितं क्षतजतुल्यवर्णके
लोहितश्च भुजगेऽसुरान्तरे ॥

---

1076 विनीता *for* विनीतः; स्वरहाहयोः *for* सुवहे हये.

1077 अत्वतत्वयोः *for* अयुतद्वये.

1079 *The text of this line is corrupt. It reads as* भारतं भुवन-मारस्त्रस्वधान्तरेषु प्रकीर्त्तितो बुधैः.

1081 *Add* भारती *after* सरस्वती.

1085 मृजू° *for* ऋजु°; °कार्म्मुके *for* °कार्मुके.

1088 मद° *for* नद°.

1089 °कर्णके *for* °वर्णके.

1090 भूजगे सुरांतरे *for* भुजगेऽसुरान्तरे.

अमृतं पयोघृतजले त्वयाचिते
त्रिदशान्नयज्ञविशेषमुक्तिषु ।
अमृतो दिवौकसि च तच्चिकित्सके
ऽप्यमृताभयामृतकं त्रिकास्वपि ॥

आहतं गुणितताडितयोः स्या--
दप्रियार्थकमृषावचने च ।
... ... ... ... ...
... ... ... ... ... ॥

... ... ... ... ...
... ... ... ... ... ।
... ... ... ... ...
... ... ... ... ... ॥

सरस्वती सरिद्भेदे सरिन्मात्रे च वाचि च ।
सरस्वती गवि क्वापि सरस्वानम्बुधौ नदे ॥

प्रतिपत्तिः प्रवृत्तौ स्यात्प्रागल्भ्ये गौरवे ऽपि च ।
संप्राप्तौ च प्रबोधे च प्रतिप्राप्तिः प्रकीर्तिता ॥

---

*1091* °धृतं° *for* °घृत°.

*1092* त्रिदशानु° *for* त्रिदशान्न°.

*1094* अमया *for* अभया; अमृकतं *for* अमृतकं.

*The text of 1097–1102 is corrupt. It reads as*

वान्द्रामाह च नरश्च पुराणराटदुरभिव दुरभिवावृते ॥
ईदमानाहतमाह पुराणकवस्त्रमर्षहसयातः ।
अधमप्रत्यमसे तदनुत्तमं वदन्ति यदनुत्त वामकाराः ॥

*1103* सरीद्भेदे *for* सरिद्भेदे.

*1104* गौरिकापि *for* गवि क्वापि; अंवुधौ *for* अम्बुधौ.

*1105* प्रागल्मे *for* प्रागल्भ्ये; रौरवेपि *for* गौरवेऽपि.

*1106* प्रवोधे *for* प्रबोधे; प्रकीर्त्तिता *for* प्रकीर्तिता.

**समाहितः** समाधिस्थे प्रतिज्ञाते यमात्मनि ।
**समाहितं** समाधाने निष्पन्नन्यस्तयोरपि ॥

... .... .... ... ... .... ।
**वैजयन्ती** पताका स्याद्वैजयन्ती जयन्तिका ॥

**ऐरावतौ** दिग्गजनागभेदा –
**वैरावताख्यौ** उडु [ *46* ] नागराजौ ।
**ऐरावतं** वासवकार्मुकं स्या –
**दैरावती** विद्युत्तडिद्विशेषः ॥

**अभिनिर्मुक्ताभ्युदितौ** भृशमुक्तौ यथाक्रमात् ।
अस्तमेति यथोदेति ययोस्तयो रविश्च तौ ॥

स्याद**पराजितो** विष्णुः पिनाकी **चापराजितः** ।
स्याद**पराजित**स्त्वष्टा चौषधिश्चा**पराजिता** ॥

॥ [ इति तान्तवर्गः ] ॥

---

*1108* अपी *for* अपि.
*1111* ऐरावतो *for* ऐरावतौ.
*1112* उडुनागरंजौ ( *before corr.* ) उडुनागराजौ.
*1113* °कार्म्मुकं *for* °कार्मुकं.
*1114* विद्युति *for* विद्युत्.
*1115* °निर्म्मुक्त° *for* °निर्मुक्त°; भृस° *for* भृश°; *omit* पिपितौ *after* भृशमुक्तौ°.
*111(* अस्तमितौ *for* अस्तमेति.
*1118* अपराजितः त्वष्टा *for* अपराजितस्त्वष्टा; च्चोषधीश्च *for* च्चौषधिश्च.

॥ थपादः ॥

कुथं कुशे प्रवेण्यां च **प्रस्थः** स्यात्सानुमानयोः ।
तुथौ गन्धाश्वभेदौ च **रथः** स्यन्दनदेहयोः ॥

**ग्रन्थः** शास्त्रे धने चैव **पार्थौ** ककुभपाण्डवौ ।
**यूथौ** जातकुरुण्टौ च **गाथा** वाग्भेदवृत्तयोः ॥

**निर्ग्रन्थः** क्षपणे निःस्वे **क्षवथुः** क्षुतकासयोः ।
**मन्मथौ** स्मरकपित्थौ **सिद्धार्थौ** बुद्धसर्षपौ ।
**गोग्रन्थिः** करवीरे तु **षड्ग्रन्था** तु शटी वचा ॥

॥ थार्धश्लोकः ॥

**आस्थामालम्बनं** विद्यादास्था चास्थानयत्नयोः ।
**संस्था** तु प्रणिधौ नाशे स्थितिसादृश्ययोरपि ॥

---

1120 थान्तपादः *for* थपादः.

1121 कुत्थं *for* कुथं.

1122 रथ *for* रथः.

1123 कुकुभ॰ *for* ककुभ॰.

1124 पूथौ *for* यूथौ; जाता॰ *for* जात॰; कुरुडौ *for* कुरुण्टौ.

1125 निग्रंथः *for* निर्ग्रन्थः; क्षपले (*before corr.*) *for* क्षपणे; नित्ये *for* निःस्वे; क्षरथुः *for* क्षवथुः; क्षत॰ *for* क्षुत॰; ॰कांक्षयोः *for* ॰कासयोः.

1126 ॰पिहितौ *for* ॰कपित्थौ; वृद्ध॰ *for* बुद्ध॰; ॰कर्षपौ *for* ॰सर्षपौ.

1127 त्करवीरे *for* करवीरे; शठी *for* शटी.

1128 थार्द्धः *for* थार्धश्लोकः.

1129 आलंवनं *for* आलम्बनं; च्चस्थान॰ *for* चास्थान॰; ॰यन्तयोः *for* ॰यत्नयोः.

1130 स्थितिःसादृश्ययोः *for* स्थितिसादृश्ययोः.

**वीथी** स्याद्रूपके पङ्क्तौ गृहाङ्गे च तथाध्वनि।
**सिक्थं** स्मृतं मधूच्छिष्टं **सिक्थमो**दनसंभवः ॥

**पृथु**रादिनृपे प्रोक्तः कृष्णजीरे महत्यपि।
**ग्रन्थि**र्व्याधिविशेषः स्याद्**ग्रन्थिः** कौटिल्यपर्वणोः ॥

**मन्थौ** साक्तवमन्थानौ **मन्थो** नेत्रमलेऽपि च।
**कन्था** मृद्धाटिता भित्तिः **कन्था** प्रावरणान्तरम् ॥

**कोथो** नेत्ररुजो भेदे **कोथः** स्याच्छटितेऽपि च।
**प्रोथः** स्यादश्वघोणायां कटिः **प्रोथ** उदाहृतः ॥

**क्राथः** स्याद्द्रवनिष्पाके **क्राथो** दुःख उदाहृतः।
**समर्थः** कथितः शक्ते संबद्धार्थे हितेऽपि च ॥

**अश्वत्थ**स्तरुभेदे स्याद**श्वत्थः** पूर्णिमातिथिः।
**उन्माथः** पाशयन्त्रे स्याद**उन्मा**[ 47 ]**थो** वधघातयोः ॥

---

*1131* स्यात्कूपके *for* स्याद्रूपके; पंगौ *for* पङ्क्तौ.
*1132* मधुछिष्टं *for* मधूच्छिष्टं.
*1133* कृष्णजीवे *for* कृष्णजीरे; मह्त्यपि *for* महत्यपि.
*1134* स्यात् ग्रंथिः *for* स्याद्ग्रन्थिः ; ⁰पर्वणोः *for* ⁰पर्वणोः.
*1135* ⁰मलेपि *for* ⁰मलेऽपि.
*1136* मुद्धाटिता *for* मृद्धाटिता.
*1137* स्याछुचितेपि *for* स्याच्छटितेऽपि.
*1138* अन्न⁰ *for* अश्व° .
*1139* स्याद्रवनिःपाके *for* स्याद्द्रवनिष्पाके.
*1140* शक्रे *for* शक्ते; सन्नद्धार्थे *for* संबद्धार्थे; हितेपि *for* हितेऽपि.
*1141* अस्वस्थः *for* अश्वत्थः ; अश्वस्थः *for* अश्वत्थः.
*1142* पाथ° *for* पाश° .

उपस्थः शिश्न उत्सङ्गे योनौ पायौ च कीर्तितः ।
निशीथः स्यादर्धरात्रौ रात्रिमात्रे च कथ्यते ॥

वरूथो रथगुप्तिः स्याद्वरूथं चर्म निर्दिशेत् ।
अनीकस्थो राजरक्षी गजशिक्षाविचक्षणः ॥

चतुष्पथं चतुर्वर्त्म संगमेऽपि च दृश्यते ।
वानप्रस्थो मधूकेऽपि किंशुके आश्रमान्तरे ।

चित्ररथो रविः प्रोक्तश्चित्ररथो नभश्चरः ।
दशार्मास्थं नष्टबीजं स्थविरं च विदुर्बुधाः ॥

॥ थश्लोकः ॥

अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु ।
प्रयोजने निवृत्तौ च विषये च प्रयुज्यते ॥



*1143* सिस्न *for* शिश्न; उत्संग *for* उत्सङ्गे; यौनौ *for* योनौ; कीर्त्तितः *for* कीर्तितः ।

*1144* अर्द्ध॰ *for* अर्ध॰ ।

*1145* स्या *for* स्याद्. चर्म्म *for* चर्म.

*1146* अनिकस्थो *for* अनीकस्थो; राजयक्ष्मा *for* राजरक्षी; ॰शीक्षा॰ *for* ॰शिक्षा॰ ।

*1147* चतुःपथं *for* चतुष्पथं; चतुर्व्वर्त्म *for* चतुर्वर्त्म; संगत्येपि *for* संगमेऽपि.

*1148* मधुकेपि *for* मधूकेऽपि.

*1149* रवीः *for* रविः ; नभस्वरः *for* नभश्चरः ।

*1150* नष्टविजं *for* नष्टबीजं; स्थविरश्च *for* स्थविरं च; विदुर्व्बुधाः *for* विदुर्बुधाः ।

*1152* अर्थोमिधेय *for* अर्थोऽभिधेये; शव्दानां *for* शब्दानां.

*1153* प्रयोजन *for* प्रयोजने.

**तीर्थः** स्यादवतारे च पात्रोपाध्यायमन्त्रिषु ।
स्त्रीणां रजसि शास्त्रे च क्षेत्रोपायाध्वरेषु च ॥

**वयःस्थः** तरुणः प्रोक्तो **वयःस्था** च गुडूचिका ।
सूक्ष्मैलामलकी ब्राह्मी काकोली चाभयापि च ॥

॥ इति थान्तवर्गः ॥

॥ दपादः ॥

**रदो** विलेखने दन्ते **छदः** स्यात्पक्षपत्रयोः ।
**क्षोद**श्च पेषणे धूलौ **स्वादु**र्मिष्टमनोज्ञयोः ॥

**छन्दा**वभिप्रायवशौ **मृदू** चातीक्ष्णकोमलौ ।
**स्वेदः** स्यात्स्वेदने घर्मे **शादः** कर्दमशष्पयोः ॥

**भद्रं** सुखे च कल्याणे **निन्दा** कुत्सापवादयोः ।
**सम्प**ल्लक्ष्म्यां गुणोत्कर्षे **शरत्**संवत्सरे ऋतौ ॥

---

1154 पारो⁰ *for* पात्रो⁰ .
1156 वयस्थः *for* वयःस्थः ; प्राक्तो *for* प्रोक्तो; वयस्ता *for* वयःस्था.
1157 सूक्ष्मेला⁰ *for* सूक्ष्मैला⁰; व्राह्मी *for* ब्राह्मी; अभवापि *for* अभयापि.
1158 थान्ताः *for* इति थान्तवर्गः .
1160 विलेषने *for* विलेखने.
1161 पेषने *for* पेषणे; स्वादु *for* स्वादुर्.
1162 छंदोरुभीप्राय⁰ *for* छन्दावभिप्राय⁰; सूत्रे *for* मृदू ; चातिक्ष्ण⁰ *for* चातीक्ष्ण°.
1163 श्वेदः *for* स्वेदः ; स्या *for* स्यात् ; श्वेदने *for* स्वेदने; घर्म्में *for* घर्मे; शरदः *for* शादः ; ⁰शस्पयोः *for* ⁰शष्पयोः.
1164 भद्रे *for* भद्रं; मुखे *for* सुखे; कुत्साप्रमादयोः *for* कुत्सापवादयोः.
1165 लक्ष्मां *for* लक्ष्म्यां.

कामदा धेनुका चापि मर्यादा सीमनि स्थितौ ।
धनदो दातरि श्रीदे विशदं स्पष्टशुक्लयोः ॥

जलदौ मुस्तकाम्भोदौ दारदौ विषहिङ्गुलौ ।
नलदमुशीरमांस्योः प्रह्लादो दैत्यशब्दयोः ॥

आमोदौ हर्षगन्धौ तु दायादौ ज्ञातिबान्धवौ ।
तमोनुदो[ 48 ]ऽग्निचन्द्रार्काः प्रतिपत्तिथिसंविदोः ॥

प्रियंवदः खेचरे च महामदो गजेऽपि च ।
विशारदो बुधेऽत्रस्ते शतह्रदा वज्रविद्युतोः ।
अपवादौ तु निन्दाज्ञे जनपदो जनदेशयोः ॥

॥ दार्धश्लोकः ॥

भेदो विदारणे माने? उपजापविशेषयोः ।
सूदस्तु व्यञ्जने ख्यातः सूपकारे च कीर्तितः ॥

---

1167 दातरी *for* दातरि; °शुक्रयोः *for* °शुक्लयोः.
1168 °अंभोधौ *for* °अम्भोदौ.
1169 ननदं *for* नलदं; °मास्योः *for* °मांस्योः; प्रजादो *for* प्रह्लादो; °शव्दयोः *for* °शब्दयोः.
1170 आमौदो *for* आमोदौ; °वांधवौ *for* °बान्धवौ.
1171 तमोनुदोअग्नि° *for* तमोनुदोऽग्नि°.
1172 गजेपि *for* गजेऽपि.
1173 विधारदो *for* विशारदो; वधे *for* बुधे; त्रस्ते *for* ऽत्रस्ते; बज्रविद्युतोः *for* वज्रविद्युतोः.
1174 अववादो *for* अपवादौ; निन्दज्ञे *for* निन्दाज्ञे.
1175 दार्द्धः *for* दार्धश्लोकः.
1176 भेदे *for* भेदो; °रिशेषयोः *for* °विशेषयोः.
1177 व्यजने *for* व्यञ्जने; कीर्त्तितः *for* कीर्तितः.

**गदा** शस्त्रविशेषं स्याद्गदो भ्राता च शार्ङ्गिणः ।
**नदो** ध्वने समुद्रे च **नदी** तरंगिणी स्मृता ॥

**कुन्दो** भ्रमणयन्त्रे स्यान्निधिपुष्पप्रभेदयोः ।
**नन्दि**रानन्द उद्दिष्टो द्यूते शुभविशेषयोः ॥

**बिन्दुः** स्याद्दन्तदाने च **बिन्दुः** पण्डितविप्रुषोः ।
**कन्दानि** मूलसस्यानि विदुः **कन्दांश्च** सूरणान् ॥

**अब्दो**ऽपि मुस्तके मेघे **अब्दः** संवत्सरेऽपि च ।
**वेदिः** परिस्कृता भूमिर्वेदिरङ्गुलिमु [ *49* ] द्रिका ॥

**कौमुदः** कार्तिको मासः **कौमुद्यौ** चन्द्रिकोत्सवौ ।
**तोयदो** मुस्तके मेघे **तोयदं** घृतमुच्यते ॥

**क्षणदः** स्याज्ज्यौतिषिके **क्षणदा** रात्रिरीरिता ।
**नर्मदा** स्यान्नदीभेदे **नर्मदः** परिहासदः ॥

---

*1178* विशेषशास्त्रं *for* शस्त्रविशेषं; शार्गिणः *for* शार्ङ्गिणः.

*1179* ध्वनः *for* ध्वने; तरंगिनी *for* तरंगिणी.

*1180* $^0$पूष्प$^0$ *for* $^0$पुष्प$^0$.

*1181* उदिष्टो *for* उद्दिष्टो; हयूते *for* द्यूते.

*1182* विन्दुः *for* बिन्दुः; स्यादंति$^0$ *for* स्याद्दन्त$^0$; विन्दुः *for* बिन्दुः; $^0$विश्रुषोः *for* $^0$विप्रुषोः.

*1183* कन्दाने *for* कन्दानि; कन्दाश्च. *for* कन्दांश्च.

*1184* अब्दोपि *for* अब्दोऽपि; मस्तके *for* मुस्तके; अब्दः *for* अब्दः ; सम्वत्सरेपि *for* संवत्सरेऽपि.

*1185* वेदीः *for* वेदिः.

*1186* कार्त्तिको *for* कार्तिको; $^0$उत्सभौ ( *before corr.* ) *for* $^0$उत्सवौ.

*1187* धृतं *for* घृतं.

*1188* स्याद्यौतिषिके *for* स्याज्ज्यौतिषिके.

*1189* नर्म्मदः *for* नर्मदा; नर्म्मदः *for* नर्मदः.

प्रमदा कामिनी मत्ता प्रमदो हर्ष उच्यते । 1190
अर्बुदो मांसकीले तु संख्याभेदेऽपि चार्बुदः ॥

गोविन्दो भगवान्विष्णुर्गोविन्दोऽधिकृतो गवाम् ।
कुसीदं जीवने वृद्धया कुसीदश्च कुसीदके ॥

निर्वादो जनवादे स्याद्वादे चापि सुनिश्चिते ।
प्रसादस्तु प्रकाशः स्यात्प्रसादः स्यादनुग्रहः ॥ 1195

प्रासादस्त्रिदशावासे प्रासादो नृपवेश्मनि ।
प्रणादस्तारशब्दे स्यात्कर्णरोगे च कीर्तितः ॥

संभेदः स्फुटने ख्यातः संभेदः सिन्धुसंगमः ।
दृषन्निष्पेषणशिला केवलापि शिला दृषद् ॥

ककुद्मत्ककुदं ? श्रेष्ठे वृषाङ्गे नृपलक्षणे । 1200
क्रव्यात्क्रव्याद् इत्येतौ स्यातां मांसाशिरक्षसोः ॥

---

*1190* प्रमादा ( *before corr.* ) *for* प्रमदा; ममत्ता *for* मत्ता.

*1191* अर्वुदो *for* अर्बुदो; सख्याभेदेपि *for* संख्याभेदेऽपि; च्वर्वुदः *for* चार्बुदः.

*1192* गोविन्दोधिकृतो *for* गोविन्दोऽधिकृतो.

*1193* कुमीदः *for* कुसीदः.

*1195* प्रशादः *for* प्रसादः.

*1196* प्रसादः *for* प्रासादः; प्रसोदो *for* प्रासादो.

*1197* °शव्दे *for* °शब्दे; कर्णरागे *for* कर्णरोगे; कीर्त्तितः *for* कीर्त्तितः.

*1198* संभेद *for* संभेदः; स्येणिरा *for* स्फुटने; ख्याता *for* ख्यातः.

*1199* दृंषन् *for* दृषन्; °शीला *for* °शिला; शीला *for* शिला; दृषत *for* दृषद्.

*1200* ककुदक *for* ककुद्मत्ककुदं; श्रेष्टे *for* श्रेष्ठे; वृषांगेन *for* वृषाङ्गे.

*1201* क्रव्यातक्रव्या इत्यादौ *for* क्रव्यात्क्रव्याद इत्येतौ; मांशशि° *for* मांसाशि°; °लन्नयोः *for* °रक्षसोः.

कुमुत्क्षपण आख्यातः कुमुत्कैरवमुच्यते ।
निषादः श्वपचे प्रोक्तो नीचस्वर उदाहृतः ॥

कपर्दं स्याज्जटाजूटे कपर्दश्च वराटके ।
आस्पदं च प्रभुत्वे स्यात्प्रतिष्ठा कृत्यमास्पदम् ॥

गोष्पदं गोपदश्वभ्रे गवां च गतिगोचरे ।
एकपदं च तत्काले एकपदी पदव्यपि ॥

अभिमर्दं विदुर्युद्धमभिमर्दोऽभिमर्दनम् ।
समर्यादं समीपं च मर्यादासहितं च यत् ॥

कोकनदं तु विख्यातं रक्ताब्जे रक्तकैरवे ।
परिवादं तु निर्वादे वीणावादनवस्तुनि ॥

मुचुकुन्दस्तरोर्भेदे मुनिदैत्यप्रभेदयोः ।
अभिष्यन्दं तु स्रवणमभिष्यन्दोऽक्षिको मलः ॥

---

1203 प्राक्तो *for* प्रोक्तो; नीतश्वर *for* नीचस्वर.
1204 वराट्टके *for* वराटके.
1205 प्रतिष्टा *for* प्रतिष्ठा.
1206 गोप्पदं *for* गोष्पदं.
1207 ऐकपदं *for* एकपदं.
1208 अभिमर्दोभि° *for* अभिमर्दोऽभि°.
1210 कोकनदन्तु *for* कोकनदं तु.
1211 परिवादन्तु *for* परिवादं तु; °वदन° *for* °वादन°.
1212 तरू° *for* तरोर्°; °प्रेदयोः *for* °प्रभेदयोः.
1213 अभिष्यन्दन्तु *for* अभिष्यन्दं तु; श्रवणं *for* स्रवणं; अभिष्यन्दोक्षिको° *for* अभिष्यन्दोऽक्षिको°; मलं *for* मलः.

पुटभेदो नदीवक्रे पुटभेदस्तु पत्तनम् ।
कुरुविन्दं पद्मरागे मुस्तासुगन्धयोरपि ॥

विष्णुपदं नभो विष्णुपदी संक्रान्तिगंगयोः ।
चतुष्पदो गवाश्वादिपशौ स्यात्करणान्तरे ।
मेघनादो रावणस्य सुतः पश्चिमदिक्पतौ ॥

॥ [ दश्लोकः ] ॥

पदं स्थानेऽपदेशे च लक्षे स्याद्वाक्यशब्दयोः ।
व्यवसाये परित्राणे पादतच्चिह्नवस्तुषु ॥

मदो हर्षे च गर्वे च नदे शुक्रे कटोदके ।
मदः कस्तूरिकायां स्यान्मदः कल्याणवस्तुनि ॥

पादः स्याच्चरणे रथ्ये गिरेः प्रत्यन्तपर्वते ।
तरोर्मूले च पादः स्यात्तुरीयांशे च कीर्तितः ॥

---

*1214* पुटजोदा *for* पुटभेदो; रदी° *for* नदी° .
*1215* कुविन्दं *for* कुरुविन्दं; प्रस्तांगस्वधियोरपि *for* मुस्तासुगन्धयोरपि.
*1216* विष्णुपदम् नभो *for* विष्णुपदं नभो; °पदि *for* °पदी.
*1217* चतुःपदो *for* चतुष्पदो.
*1219* *Add* दश्लोकः.
*1220* वाह्य° *for* वाक्य° ; °शव्दयोः *for* °शब्दयोः.
*1221* व्यवशाये *for* व्यवसाये; पादउचिह्न° *for* पादतच्चिह्न° .
*1222* गर्व्ये *for* गर्वे; शुक्ले *for* शुक्रे.
*1223* स्या *for* स्यान् ; कल्यान° *for* कल्याण° .
*1224* गिरौ *for* गिरेः.
*1225* स्या *for* स्यात् ; कीर्त्तितः *for* कीर्तितः .

मन्दाः स्वैराल्परोगार्तमूढाभाग्यशनैश्चराः ।
[50] हस्तिजातिप्रभेदे च मन्दो मन्दरतो नरः ॥

संविदाजौ प्रतिज्ञायामाचारज्ञाननामसु ।
संभाषणे क्रियाकारे संकेते तोषणेऽपि च ॥

कुमुदं कैरवं ख्यातं कुमुदो दानवान्तरः ।
कुमुदाः कपिदिङ्नागनागभेदाः प्रकीर्तिताः ॥

शारदौ वर्षशालीनौ प्रत्यग्रप्रतिभान्वितौ ।
शारदः सप्तपर्णे स्यात्पीतमुद्गे च कीर्तितः ॥

आक्रन्दः क्रन्दने ध्वाने नाथे च दारुणे रणे ।
पार्ष्णिग्राहात्परो राजा आक्रन्दः समुदाहृतः ॥

अर्धेन्दुरर्धचन्द्रे च नखखण्डनकान्तरे ।
अर्धेन्दुः स्यादतिप्रौढस्त्रीगुह्याङ्गुलियोजने ॥

---

*1226* मंदा *for* मन्दाः ; नैर॰ *for* स्वैर॰ ; ॰अल्परोगर्त्त॰ *for* ॰अल्परोगार्त॰; ॰सूच॰ *for* ॰मूढ॰.

*1227* मंदतरो *for* मन्दरतो; त्तरः *for* नरः.

*1228* संवृताजौ *for* संविदाजौ; आचारे॰ *for* आचार॰ ; मामसु *for* ॰नामसु.

*1229* संभाषण *for* संभाषणे; शंकेते *for* संकेते; दोषणेपि *for* तोषणेऽपि.

*1230* कैरव *for* कैरवं.

*1231* काल॰ *for* कपि॰ ; प्रकीर्त्तिताः *for* प्रकीर्तिताः .

*1232* शारदो *for* शारदौ; ॰गामिनो *for* ॰शालीनौ; प्रत्यग्ध॰ *for* प्रत्यग्र॰.

*1233* पीतारद्धे *for* पीतमुद्गे; कीर्त्तितः *for* कीर्तितः .

*1234* ध्वने *for* रणे.

*1235* पार्ष्पिग्रहात् *for* पार्ष्णिग्राहात्; आक्रान्दः *for* आक्रन्दः.

*1236* अद्धेन्दुः *for* अर्धेन्दुः; अर्द्ध॰ *for* अर्ध॰.

*1237* अद्धेन्दु *for* अर्धेन्दुः; ॰ प्रोढ ॰ *for* ॰ प्रौढ ॰; ॰मोजने *for* (*before corr.*) ॰योजने.

अष्टापदं सुवर्णे स्यादष्टापदश्च मल्लिका ।
अष्टापदः कीलभेदे शारीणां फलकेऽपि च ॥

॥ इति दान्तवर्गः ॥

॥ धपादः ॥

श्रद्धा संप्रत्ययः काङ्क्षा बाधा दुःखनिषेधयोः ।
गोधा तले निहाकायां बोधी समाधिपिप्पलौ ॥

सिद्धिरोषधिसंपत्त्योर्ऋद्धिर्वर्धन ओषधौ ।
दोग्धा वत्से च गोपाले व्याधिः स्याद्गदकुष्ठयोः ॥

गाधः स्थाने च लिप्सायां व्याधो मृगयुदुष्टयोः ।
मुग्धः स्यात्सुन्दरे मूढे स्निग्धे वत्सलचिक्कणे ॥

अर्धः खण्डे समांशेऽर्धोमिद्धमाततदीप्तयोः ।
बुद्धा धीरजिनज्ञाता लुब्धौ मृगयुकाङ्क्षिणौ ॥

---

*1239* कीशभेदे *for* कीलभेदे; शारिणां *for* शारीणां.

*1240* दान्तः *for* इति दान्तवर्गः.

*1241* धपादाः *for* धपादः.

*1242* बाधा *for* बाधा; दुखा⁰ *for* दुःख⁰; ⁰चिषेधयोः *for* ⁰निषेधयोः.

*1243* निकायायां ( *before corr.* ) *for* निहाकायां; वेधि *for* बोधी; *omit* समाधी.

*1244* ⁰ संपत्योर् *for* ⁰ संपत्त्योर् ; वर्द्धे *for* ऋद्धिर् ; वर्द्धन *for* वर्धन.

*1245* व्याधि *for* व्याधिः.

*1246* लिंपायां *for* लिप्सायां; ⁰ दृष्टयोः *for* ⁰ दुष्टयोः.

*1247* स्या *for* स्यात् ; स्नीग्धे *for* स्निग्धे; ⁰ चिह्नने *for* ⁰ चिक्कणे.

*1248* अर्द्ध *for* अर्धः ; समासर्द्धं *for* समांशेऽर्धं ; इद्दं *for* इद्धं ; ⁰दिप्तयोः *for* ⁰दीप्तयोः.

*1249* बुद्धिर् *for* बुद्धा; लब्धौ *for* लुब्धौ; ⁰ काक्षिणौ *for* ⁰ काङ्क्षिणौ.

**संसिद्धिः** सहजे सिद्धौ **वीरुद्धिटप**शाखयोः ।
**विबुधः** पण्डिते देवे **उत्सेधौ** वपुरुन्नती ॥

**आविद्धौ** कुटिलक्षिप्तौ **संबाधौ** योनिसंकटौ ।
**संबोध**श्च क्षये बोधे **प्रणिधिः** प्रार्थ[51]ने चरे ॥

**संनद्धो** वर्मिते व्यूढे **दुर्विधो** दुर्गते खले ।
**प्रसिद्धो** भूषिते ख्याते **निरोधो** नाशरोधयोः ॥

॥ धार्धश्लोकः ॥

**विधु**श्चन्द्रे हृषीकेशे कर्पूरे च **विधुः** स्मृतः ।
**विधी** विधानधातारौ **विधिः** स्यात्कालदैवयोः ॥

**विधा** विधौ प्रकारे च गजान्नवेतनर्धिषु ।
**सुधा** लेपोऽमृतं मूर्वा गङ्गेष्टिका स्नुही **सुधा** ॥

**वधू**र्नवोढयोषायां स्नुषाभार्याङ्गनासु च ।
**दधि** क्षीरोद्भवं वस्तु तारे **दधि** च वासके ॥

---

1250 संसिद्धेः *for* संसिद्धिः ; ° शाषयोः *for* ° शाखयोः.

1251 विवुधः *for* विबुधः ; उन्मेधा *for* उत्सेधौ.

1252 संवाधौः *for* संबाधौ ; ° संकटौः *for* ° संकटौ.

1253 संवोधः *for* संबोधः; वोधे *for* बोधे.

1254 वर्हिते *for* वर्मिते; व्युढे *f0r* व्यूढे.

1255 दुषिते *for* भूषिते.

1256 धार्द्ध *for* धार्धश्लोकः.

1258 विधुर् *for* विधी; विधुः *for* विधिः ; °देवयोः *for* °दैवयोः.

1259 विधा *for* विधौ; गजानु° *for* गजान्न°; °रेतनुर्द्धिषु *for* °वेतनर्धिषु.

1260 लेपोनृतं *for* लेपोऽमृतं; मुर्वी *for* मूर्वा; सुही *for* स्नुही; *omit* स्वभी; स्वधा *for* सुधा.

1261 वधुर् *for* वधूर्. ष्णुषा° *for* स्नुषा°.

1262 दधी *for* दधि; क्षिरेद्भवं *for* क्षीरोद्भवं;

आधयः स्युर्मनःपीडाव्यसनाधिष्ठानबन्धकाः ।
साधु शोभनमाख्यातं साधुर्वार्धुषिकेऽपि च ॥

राधो वैशाखमासे स्याद्राधा च कृष्णगोपिका ।
अन्धो दर्शननिर्मुक्तो जन्तुरन्धं तमो मतम् ॥

सिन्धुर्नद्यां समुद्रे च नददेशप्रभेदयोः ।
गन्धो लेशे तथामोदे गन्धः संबन्धमात्रके ॥

शुद्धं शुक्रे च पूते च केवले च प्रयुज्यते ।
सिद्धो योगे समुत्पन्ने सिद्धाः स्युर्देवयोनयः ॥

वृद्धं रूढे च शैलेये वृद्धौ स्थविरपण्डितौ ।
दग्धं प्लुष्टं दिक् च दग्धा रविर्यस्यां न तिष्ठति ॥

दिग्धो विषाक्तबाणे स्याद्दिग्धं लिप्तार्थवाचकम् ।
विद्धं सूच्यादिनिर्भिन्ने सादृश्यक्षिप्तयोरपि ॥

---

1263 °वंधकाः *for* °बन्धकाः.
1264 शाधु *for* साधु; वार्द्धषिकेपि *for* वार्धुषिकेऽपि.
1265 वैशाष° *for* वैशाख°.
1266 जन्तुवत्वं *for* जन्तुरन्धं.
1267 न्यद्यां *for* नद्यां.
1268 देशे *for* लेशे; संवंध° *for* संबन्ध°.
1270 सिद्धौ *for* सिद्धो; स्युःर् *for* स्युर्.
1272 दुग्धं *for* दग्धं.
1273 दिग्धा *for* दिग्धो; विषात्कवाणे *for* विषाक्तबाणे; स्या *for* स्याद्; सिल्पार्थ° *for* लिप्तार्थ°.
1274 दिग्धं *for* विद्धं; अपी *for* अपि.

श्राद्धं श्रद्धान्विते श्राद्धं हव्यकव्यविधौ स्मृतम् ।
वृद्धिः स्याद्वर्धने ऋद्धौ वृद्धिर्योगकुरुण्टयोः ॥

विवधवीवधौ भारे पर्याहारे तथाध्वनि ।
अवधी कालदण्डौ स्तः सीमानोऽवधयः स्मृताः ॥

उपधिं व्याजमिच्छन्ति रथस्यावयवे तथा ।
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ॥

संनिधिः [ 52 ] संनिधाने स्यात्प्रत्यक्षे संनिधिः स्मृतः ।
निषधः कठिने देशे तद्राजे पर्वतान्तरे ॥

समाधिर्ध्याननीवाकनियमेषु समर्थने ।
अगाधमतलस्पर्शमगाधं विवरं विदुः ॥

उपाधिर्धर्मचिन्तायां गृहद्रव्ये विशेषणे ।
आनद्धं मुरजाद्यं स्यादानद्धं वद्धमात्रकम् ॥

---

1275 आद्धं *for* श्राद्धं; अद्धान्विते *for* श्रद्धान्विते; श्राद्धँ *for* श्राद्धं.
1276 वर्द्धने *for* वर्धने; °कुरून्टयोः *for* °कुरुण्टयोः.
1277 विवधौ° *for* विवध°; °वीविधौ *for* °वीवधौ; अध्वनिः *for* अध्वनि.
1278 कल्दण्डो *for* कालदण्डौ; सीमनोवधय *for* सीमानोऽवधयः.
1279 उपाधिं *for* उपधिं; इछन्ति *for* इच्छन्ति.
1280 °सूर्यकेः *for* °सूर्यके.
1281 सन्निधीः *for* संनिधिः
1282 निधयः ( *before corr.* ) निषधः.
1283 °नीराक° *for* °नीवाक°.
1285 उपाधि *for* उपाधिर्; गृहद्रव्य *for* गृहद्रव्ये.
1286 स्यात् आनद्धं *for* स्यादानद्धं; वद्ध° *for* बद्ध°.

न्यग्रोधौ चावटव्यामौ न्यग्रोधी वृषपर्णिका ।
कबन्धं सलिले रुण्डे कबन्धो राक्षसान्तरम् ॥

महौषधी पलाण्डु स्याच्चण्डा चातिविषापि च ।
परिव्याधो वेतसे स्यात्परिव्याधो द्रुमोत्पले ॥

अवरोधस्तिरोधाने राजदारेषु तद्गृहे ।
समुन्नद्धाः समुद्भूतपण्डितंमन्यगर्विताः ॥

अवष्टब्धमदूरे स्यादाक्रान्तमवलम्बितम् ।
ब्रह्मबन्धुरधिक्षेपे निदर्शने द्विजान्तरे ॥

आशाबन्धः समाश्वासे तथा मर्कटजालके ।
अनिरुद्ध उषास्वाम्यनिरुद्धो यश्चरो भवेत् ॥

उपलब्धिः स्मृता बुद्धौ प्राप्तौ ज्ञाने च दृश्यते ।
तीक्ष्णगन्धा वचा प्रोक्ता तीक्ष्णगन्धा च राजिका ॥

---

*1287* ⁰व्यासौ *for* ⁰व्यामौ. मृषि⁰ *for* वृष⁰.
*1288* कवंधे *for* कबन्धं; रुन्क्ते *for* रुण्डे; कवंधो *for* कबन्धो.
*1289* महौषधीः *for* महौषधी.
*1290* वेतने *for* वेतसे.
*1291* राजराजेषु *for* राजदारेषु; तद्ग्रिहे *for* तद्गृहे.
*1292* समन्नद्धाः *for* समुन्नद्धाः; समूद्भूत॰ *for* समुद्भूत॰.
*1293* अवष्टंब्धं *for* अवष्टब्धं; अवलंवितं *for* अवलम्बितं.
*1294* ब्रह्मवंधुः *for* ब्रह्मबन्धुः; अधीक्षेपे *for* अधिक्षेपे.
*1295* आसावंधः *for* आशाबन्धः; समाश्वाते *for* समाश्वासे; ⁰वालके (*before corr.*) ⁰जालके.
*1296* उखास्वामीऽनिरुद्धो *for* उषास्वाम्यनिरुद्धो; यद्यलो *for* यश्चरो.
*1297* उपलब्धि *for* उपलब्धिः; वृद्धेः *for* बुद्धौ.

॥ धश्लोकः ॥

**मधु** मद्ये च क्षौद्रे [ च **मधु** ] पुष्परसे जले ।
**मधुश्चैत्रे** मधूके तु **मधुर्दै**त्यवसन्तयोः ॥

**सन्धिर्भगे** सुरुङ्गायां **सन्धिः** संघटनेऽपि च ।
नाटकाङ्गेऽपि **सन्धिः** स्यादवकाशेऽपि विद्यते ।

**स्कन्धो** राज्ञि भुजामूले समाम्नायसमूहयोः ।
काये तरुप्रकाण्डे स्याद्राज्ञां भाण्डादिके करे ॥

**मागधी** पिप्पलीयूथ्यो**र्मागधो** मगधोद्भवः ।
**मागधा** वन्दिनः क्वापि सुताश्च क्षत्रियाविशोः ॥

**अनुबन्धो** दोषोत्पादे प्रकृत्यादिविनश्वरे ।
मुख्या [53] नुयायिनि शिशौ प्रकृतस्यानिवर्तने ॥

॥ इति धान्तवर्गः ॥

---

1299 धश्लोकोदा *for* धश्लोकः.
1300 *Add* च मधु *after* क्षौद्रे.
1301 मधर् *for* मधुर्; दैत्ये° *for* दैत्य°.
1302 संघटनेपि *for* संघटनेऽपि.
1303 लाटकांगेपि *for* नाटकाङ्गेऽपि; सन्धि *for* अपि.
1304 संधि *for* स्कन्धो; भूजा° *for* भुजा°.
1307 वंदिनः *for* वन्दिनः ; सूताः *for* सुताः ; °विश्णेः *for* °विशोः.
1308 अनुवंधो *for* अनुबन्धो.
1309 मुख्यांल° *for* मुख्यानु° ; °निवर्त्तने *for* °निवर्तने.
1310 धान्ता *for* इति धान्तवर्गः.

॥ नपादः ॥

द्युम्नं पराक्रमं द्रव्यं वनं काननीरयोः ।
वस्ने वेतनदानीये धनं गोधनवित्तयोः ॥

पानं स्याद्रक्षणं पीतिश्छन्नं स्याच्छादितं रहः ।
रत्नं मणावुत्कृष्टे च चिह्नं लक्ष्मपताकयोः ॥

अन्नं भुक्ते च भक्ते च स्थानं ग्रामप्रयुक्तयोः ? ।
कृत्स्नमम्भसि निःशेषे गानं गीते ध्वनावपि ॥

लग्नं राश्युदये चापि रास्नैलापर्णिकापि च ।
श्येनौ विहंगमश्वेतौ विन्नौ लब्धविचारितौ ॥

इनः सूर्ये प्रभौ राज्ञि योनिः स्यादाकरे भगे ।
हीनन्यूनौ [च ?] गर्ह्यार्थौ सूनुः पुत्रेऽनुजेऽपि च ॥

मीनो मत्स्ये राशिभेदे भानू रश्मिदिवाकरौ ।
भर्म भृतौ सुवर्णे स्याच्चर्म स्यात्फलकेऽपि च ॥

---

*1311* नपादोदाः *for* नपादः.

*1312* पराजय *for* पराक्रमं.

*1313* ष्नाने *for* वस्ने; चेतन° *for* वेतन°; वोधन° *for* गोधन°.

*1314* पीतिश्छ्न्नं *for* पीतिश्छन्नं; स्याछदितं *for* स्याच्छादितं.

*1315* रक्तं *for* रत्नं; वनाव् *for* मणाव्.

*1316* धानं *for* स्थानं; गमप्रयुज्ययोः *for* ग्रामप्रयुक्तयोः.

*1317* कृस्नं *for* कृत्स्नं.

*1318* लाम्नैला° *for* रास्नैला°.

*1319* लव्ध° *for* लब्ध°.

*1320* भानुः *for* इनः.

*1321* °न्युनौ *for* °न्यूनौ; *Add* च *before* गर्ह्यार्थौ; अनुजेपि *for* अनुजेऽपि.

*1322* मीने *for* मीनो; मत्से *for* मत्स्ये; रासि° *for* राशि°.

*1323* भस्म *for* भर्म; चर्म्म *for* चर्म; फलकेपि *for* फलकेऽपि.

लक्ष्म चिह्ने प्रधाने च प्रेम स्निग्धत्वनर्मणोः ।
सद्म जले गृहे च स्याद्वर्त्म नेत्रच्छदेऽध्वनि ॥

वृषा कर्णे महेन्द्रे स्यादर्वा च कुत्सिताश्वयोः ।
वाजी हये खगे बाणे गोष्मी गोमानुपासकः ॥

स्वामिनौ गुरुभर्तारौ कृतिनौ योग्यपण्डितौ ।
वज्री च सुगते शक्रे हलिनौ बलकर्षकौ ॥

रागी च कोपने रक्ते अलिनौ भृङ्गवृश्चिकौ ।
शयनं सुरतं शय्या मैथुनं संगते रते ॥

दंशनं कवचे दंशे गहनं गह्वरे वने ।
अवनं रक्षणे प्रीतौ निधनं कुलनाशयोः ॥

विज्ञानं कर्मणि ज्ञाने प्रज्ञानं बुद्धिचिह्नयोः ॥
वसनं छादने वस्त्रे रोदनं क्रन्दनेऽश्रुणि ॥

---

*1324* स्निग्धानुकर्म्मणोः *for* स्निग्धत्वनर्मणोः.
*1325* पद्म *for* सद्म; वर्त्त *for* वर्त्म; नेछत्रदेध्वनिः *for* नेत्रच्छदेऽध्वनि
*1326* महेन्द्रः *for* महेन्द्रे.
*1327* वाणे *for* बाणे; प्रकासकः *for* उपासकः.
*1328* स्वामिनी *for* स्वामिनौ; गुरू° *for* गुरु°; °भत्तारौ *for* °भर्तारौ.
*1329* वन° *for* वल°.
*1330* गोपने *for* कोपने; रक्त *for* रक्ते.
*1331* सयनं *for* शयनं.
*1332* दशनं *for* दंशनं.
*1333* °नाशयौः *for* नाशयोः.
*1334* कर्म्मंवि *for* कर्मणि; वुद्धि° *for* बुद्धि°.
*1335* क्रंदनेश्रुवे *for* क्रन्दनेऽश्रुणि.

तोदनं व्यथने तोत्रे छदनं गरुतिच्छदे ।
कठिनं कक्खटे स्थाल्यां बन्धनं वधबन्धयोः ॥

[ 54 ] सेवनं सीवनोपास्त्योर्वर्जनं त्यागहिंसयोः ।
तलिनं विरले स्तोके सदनं भवने जले ॥

क्रन्दने रोदनाह्वाने मेहने मूत्रशेफसी ।
लङ्घनं क्रमणे ग्लानौ गर्जनं ध्वनिकोपयोः ॥

दशनः कवचे दन्ते मदनो नीरपुष्पयोः ।
अपानौ गुदतद्वातौ चाशनी वज्रविद्युतौ ॥

आपन्नः सापदि प्राप्ते विलग्नौ मध्यलग्नयोः ।
सेनान्यौ गुहसेनापौ कानीनो व्यासकर्णयोः ॥

**शोभनो** ग्रहयोगेऽपि **वपनं** मुण्डनेऽपि च ।
**कामिनी** स्त्री स्वचित्राश्च **वाहिनी** सिन्धुसेनयोः ॥

---

*1336* तोदने *for* तोदनं; गव्यति *for* गरुति; छदे *for* च्छदे.
*1337* कक्थटे *for* कक्खटे; वंधनं *for* बन्धनं; °वंधयोः *for* °बन्धयोः.
*1338* सीवनोपांत्यो *for* सीवनोपास्त्योर्.
*1339* विधने *for* विरले; जने *for* जले.
*1340* °द्धाने *for* °ह्वाने; सूत्र° *for* मूत्र°.
*1342* वीर° *for* नीर°.
*1343* भृगु° *for* गुद°.
*1344* सपदी *for* सापदि; विलग्नौ *for* विलग्नो.
*1345* °सेनायौ ( *before corr.* ) *for* °सेनापौ; कानिनो *for* कानीनो.
*1346* °योगेपि *for* °योगेऽपि; वयनं *for* वपनं; मुंडनेपि *for* मुण्डनेऽपि.

ह्रादिनी वज्रतडितोर्वर्तिनी वृत्तिमार्गयोः ।
द्विजन्मा विहगे विप्रे भूतात्मा धातृदेहयोः ॥
सुकर्मा ग्रहयोगेऽपि अथर्वा ब्राह्मणेऽपि च ।
पलाशी राक्षसे वृक्षे कञ्चुक्यहिमहल्लयोः ॥
विलासी भोगिनि व्याले विषाणी गजशृङ्गिणोः ।
कलापी कोकिले प्लक्षे शिखरी पर्वते तरौ ॥
प्रयोजनं कार्यहेत्वोरायोधनं रणे हतौ ।
पृथग्जनौ नीचमूर्खौ आत्मयोनी विधिस्मरौ ॥
चित्रभानू रविर्वह्निः सामिधेनी च ऋक्समित् ।
मातुलानी कलायेऽपि सरोजिन्यम्बुजेऽपि च ॥
महाधनं सुवस्त्रे च सामयोनिर्गजेऽपि च ।
संप्रयोगी कामुके च व्योमचारी खरेऽपि च ॥

1348 ह्रादनी *for* ह्रादिनी; वर्त्तिनी *for* वर्तिनी; व्रत्तिमाग्नयोः *for* वृत्तिमार्गयोः.

1349 भृतासो *for* भूतात्मा; देहधातृयोः *for* धातृदेहयोः.

1350 °योगेपि *for* योगेऽपि; अथवात्रा *for* अथर्वा; ब्राह्मणेपि *for* ब्राह्मणेऽपि.

1351 पलासी *for* पलाशी; °महन्नयोः *for* °महल्लयोः.

1352 भोग्रनिर् *for* भोगिनि; वाले *for* व्याले; °शृंगिनोः *for* °शृङ्गिणोः.

1353 कलासी *for* कलापी.

1354 आयोजलं *for* आयोधनं.

1355 पिशुनौ *for* पृथग्जनौ; मुख्यौ *for* मूर्खौ; आत्मयोनि (*before corr.*) आत्मयोनिर् (*after corr.*) *for* आत्मयोनी.

1356 चित्रभानु *for* चित्रभानू; सामीधेनी *for* सामिधेनी.

1327 कपालेपि *for* कलायेऽपि; सारोजिनी (*before corr.*) *for* सरोजिनी; अंवुजेपि *for* अम्बुजेऽपि.

1358 गजेपि *for* गजेऽपि.

1359 कार्मुके *for* कामुके; सुगे *for* खगे.

॥ नार्ध श्लोकः ॥

सानवो गहनप्रस्थवात्यामार्गाग्र ? कोविदाः ।
स्वप्नं स्वापे च सुप्तस्य विज्ञाने च प्रयुज्यते ॥

मुनिर्यन्ताङ्गुदी बुद्धः पियालागस्तिकिंशुके ।
जिनो [ बुद्धेऽति ? ] वृद्धे च जिनः [ 55 ]स्यादर्हतीत्यपि ॥

मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतावपि ।
वानं शुष्कफले शुष्के सीवने जलसंप्लवे ॥

स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि ?
भिन्नमन्यार्थवाचि स्याद्भिन्नौ संगतदारितौ ॥

दानं हस्तिमदे दत्ते छेदरक्षणशुद्धिषु ।
हनुः स्त्रियां कपोलाधो हनुर्हट्टविलासिनी ॥

---

1360 नार्द्धोदा *for* नार्धश्लोकः.

1361 °प्रस्थो° *for* °प्रस्थ° ; °वात्य° *for* °वात्या° ; °यस्कं शिल्पिकोविदाः *for*° मार्गाग्रकोविदाः.

1362 स्वाये *for* स्वापे.

1363 मुनी *for* मुनिर् ; यन्तागजावृद्धपिप्पलाविति° *for* यन्ताङ्गुदी बुद्धः पियालागस्ति°.

1364 जिने *for* जिनो; *Add* बुद्धेऽति° *before* °वृद्धे; अर्हमत्यपि *for* अर्हतीत्यपि.

1366 जन° *for* जल°

1367 द्रिग्धो *for* स्निग्धे; चालस्ये नयनद्वयोः *for* घनत्वालस्ययोरपि.

1369 दत्तो *for* दत्ते.

1370 हनु *for* हनुः ; स्त्रीयां *for* स्त्रियां; कपालाधः *for* कपोलाधः ; °हट° *for* °हट्ट° .

तनुस्त्वगल्पकायेषु तनुः स्याद्विरले कृशे ।
मृत्स्ना तु वरिका प्रोक्ता मृत्स्ना प्रशस्तमृत्तिका ॥

ज्योत्स्ना ज्योतिःषु या रात्रिर्ज्योत्स्ना चन्द्रातपः स्मृतः ।
ज्योत्स्नी पटोलिका ख्याता ज्योत्स्नी ज्योत्स्नान्विता निशा ॥

वर्ष्म देहे प्रमाणे स्यादाकारेऽप्यतिसुन्दरे ।
धाम शक्तौ प्रभावेऽपि तेजोमन्दिरजन्मसु ॥

पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि ।
धन्वा स्थाने च चापे च धन्वा मरुरपि स्मृतः ॥

राजा नृपे प्रभौ शक्रे राजा क्षत्रियचन्द्रयोः ।
ग्रावा च प्रस्तरे शैले ग्रावा मेघे च कीर्तितः ॥

[ श्येनाख्यो विहगः पत्री ? ] पत्रिणौ शरपक्षिणौ ।
शाखिनः स्युः तुरुष्काख्या जना वृक्षाश्च शाखिनः ॥

---

1371 विरदे *for* विरले.
1372 प्रसस्त॰ *for* प्रशस्त॰ .
1373 जोतिषु *for* ज्योतिःषु.
1375 आकारेप्यति॰ *for* आकारेऽप्यति॰ .
1376 प्रभावेपि *for* प्रभावेऽपि.
1377 ॰सूत्रापि॰ *for* ॰सूत्रादि॰.
1378 *Add* च *after* स्थाने.
1379 राज *for* राजा; क्षय॰ *for* क्षत्रिय॰ .
1380 प्रस्थरे *for* प्रस्तरे; कीर्त्तितः *for* कीर्तितः.
1381 *The first half is missing*; रश॰ *for* शर॰.
1382 स्यु *for* स्युः.

आर्थिनः स्युर्याचनका अर्थिनः सेवका अपि ।
सादिनः स्यन्दनारोहा हस्त्यारोहाश्च सादिनः ॥

खड्गी च गण्डके स्यात: सेवकोऽसिधरश्च यः ।
पार्शी चाखेटकः प्रोक्तः पाशी स्याद्वरुणे यमे ॥

चक्री सर्पे खले विष्णौ चक्री स्यात्काभ्र ? तैलिकः ।
धन्वी च ककुभे पार्थे धन्वी चापविचक्षणः ॥

शिखी वह्नौ मयूरे च व्रतिभेदः शिखी स्मृतः ।
पद्मी गजे[ 59 ]ऽब्जवत्यां च स्त्रीभेदे चापि पद्मिनी ॥

सूचनाभिनये प्रोक्ता दर्शने व्यधनेऽपि च ।
कुहना दम्भचर्यायां कुहनावीर्ष्यदाम्भिकौ ॥

पूतना राक्षसी काचित्पूतना च हरीतकी ।
रोचना मङ्गलद्रव्यं रोचनः कूटशालमलिः ॥

---

*1383* जाचनका *for* याचनका.

*1384* श्यन्दनारोहा *for* स्यन्दनारोहा.

*1385* सेवकोसिधरः *for* सेवकोऽसिधरः.

*1386* आसी *for* पाशी; प्रोक्तो *for* प्रोक्तः ; दासी *for* पाशी; वरुणो *for* वरुणे.

*1388* °विपक्षिणः *for* °विचक्षणः.

*1389* शीखी *for* शिखी.

*1390* गजेन्द्रवत्याश्च ( *before corr.* ) गजेन्दीवरे च ( *after corr.* ) *for* गजेऽब्जवत्यां च.

*1391* प्यधनेपि *for* व्यधनेऽपि.

*1392* °वर्यायां *for* °चर्यायां; °दीर्घ° *for* °वीर्ष्य°.

*1394* कूटशाल्मकीः *for* कूटशाल्मलिः.

**वाणिनी** नर्तकी मत्ता विदग्धा च स्मृता बुधैः ।
**संधिन्य**कालदुग्धा गौर्वृषाक्रान्ता च **संधिनी** ॥

**हस्ती** चुतकावेणौ ? स्यात्स्त्रीभेदे चापि **हस्तिनी** ।
**नलिनी** स्यात्सप्तमा गंगा पद्मे चापि सरोवरे ॥

**शङ्खिनी** कुचुचूका स्त्री स्त्रीभेदे चोरपुष्प्यपि ।
**अब्जिनी** ? **बिसिनी**त्यादि पद्मे पद्माकरेऽपि च ॥

**रजनी** नीलिका रात्रि............ ।
**धमनी** च शिरा प्रोक्ता तथा हट्टविलासिनी ॥

**शतघ्नी** शस्त्रभेदे च **शतघ्नी** वृश्चिकाल्यपि ।
**अर्शोघ्नी** तालमूली स्यादर्शोघ्नश्चापि शूरणः ॥

**अयनं** पथि सूर्यस्याप्युदग्दक्षिणतो गतौ ।
पाकस्थानं कुलालस्य **पवनं पवनो** मरुत् ॥

~~~~~~~~~~

1395 वाल्नी *for* वाणिनी; चनर्त्त *for* नर्तकी; विदग्धा *for* विदग्धा; बुधैः *for* बुधैः.
1396 गोर् *for* गौर्; वषकान्ता *for* वृषाक्रान्ता.
1398 पद्मेष्वपि *for* पद्मे चापि.
1399 शंषिनी *for* शङ्खिनी.
1400 विसनी° *for* विसिनी°; पद्माकरेपि *for* पद्माकरेऽपि.
1402 शिवा *for* शिरा; ईष्टविलाशिनी *for* हट्टविलासिनी.
1403 वृश्चिकान्यपि *for* वृश्चिकाल्यपि.
1404 अर्शघ्नी *for* अर्शोघ्नी; शुरणः *for* शूरणः.
1405 सूर्यास्यपि *for* सूर्यस्यापि; उदग्धक्षिणतः *for* उदग्दक्षिणतः.
1406 पवनं कुलालपाके च स्थाने च *for* पाकस्थानं कुलालस्य पवनं; मरुत *for* मरुत्.
~~~~~~~~~~

वृजिनं किल्विषे भुग्ने वृजिनश्च शिरोरुहः ।
रसनं स्वदने शव्दे रसना काञ्चिजिह्वयोः ॥

सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च ।
जघनश्च स्त्रियाः पूर्वश्रोणीभागे कटौ तथा ॥

स्तननं मेघनिध्वाने स्तननं शव्दमात्रके ।
मलनः पटवासे स्यान्मर्दल मलनं मतम् ॥

जयनं तुरगादीनां संनाहे विजये तथा ॥
मिथुनं राशिभेदे स्यान्मिथुने युग्मदम्पती ॥

भुवनं गगने प्रोक्तं सलिले विष्टपे जने ।
शमनं च वधे शान्तौ शमनो यमराट् स्मृतः ॥

हसनं [ 57 ]हासमिच्छन्ति हसन्यंगारधानिका ।
तपनं तापमादित्यं वदन्ति नरकान्तरम् ॥

---

1407 कल्विषे *for* किल्विषे; वृजिघ्नः *for* वृजिनः.
1408 स्वदले *for* स्वदने; शव्दे *for* शव्दे; काश्चि° *for* काञ्चि°.
1409 रसनं *for* सवनं; स्लाने *for* स्नाने; सामनिर्दलनेपि *for* सोमनिर्दलनेऽपि.
1410 स्त्रीया *for* स्त्रियाः.
1411 शव्द° *for* शव्द°.
1412 स्मलनः *for* मलनः.
1413 सन्नहे ( *before corr* ) संनाहे.
1414 मिथुनं *for* मिथुने.
1415 गमने ( *before corr.* ) *for* गगने; पिष्टपे *for* विष्टपे; जले *for* जने.
1416 च वर्णे *for* च वधे; यमराट *for* यमराट्.
1417 इछन्ति *for* इच्छन्ति.

**असनं** प्रापणे प्रोक्त**मसनः** पीतसालके ।
**श्वसनं** मारुतं श्वासं मदनाख्यं द्रुमं विदुः ॥

**दहनाः** स्युः सुदुर्वृत्तवह्निभल्लातचित्रकाः ।
**मलिनः** कृपणे म्लाने **मलिनी** ऋतुमत्यपि ॥

**मदनः** पादपे कामे मधूच्छिष्टवसन्तयोः ।
**शकुनो** विहगे ज्ञेयः **शकुनः** शुभशंसकः ॥

**शकुनिः** करणे च स्या**च्छकुनी** पक्षिसौबलौ ।
**स्पर्शनो** मरुते ज्ञेयः **स्पर्शनं** स्पर्शदानयोः ॥

**हायनास्तु** समाख्याता व्रीहिसंवत्सरार्चिषः ।
**गोस्तनो** हारभेदे च द्राक्षा तु **गोस्तनी** मता ॥

**छर्दनो**ऽलम्बुषे निम्बे **छर्दनं** वमनं मतम् ।
**वामनो** माधवेऽङ्कोठे खर्वे दक्षिणदिग्गजे ॥

~~~~~~~~

1419 प्रापने *for* प्रापणे; अनसः *for* असनः ; °सालने *for* °सालके.
1421 सुदुवृत्त° *for* सुदुर्वृत्त°.
1423 धनुछिष्ट° *for* मधूच्छिष्ट°.
1424 °संककः *for*° शंसकः .
1425 शकुनी *for* शकुनिः ; स्याछकुनिः *for* स्याच्छकुनी; °शैवलौ *for* °सौबलौ.
1426 °दाननयोः *for* °दानयोः .
1427 त्रिहि° *for* व्रीहि°; °आर्चिषः *for* °अर्चिषः .
1428 गोस्तनी *for* गोस्तनो; शर° *for* हार°.
1429 छर्दनोलोम्बुषे *for* छर्दनोऽलम्बुषे; विंवे *for* निम्बे; वसनं ( *before corr.* ) *for* वमनं.
1430 माधवेहंकोठे *for* माधवेऽङ्कोठे.
~~~~~~~~

फाल्गुनस्त्वर्जुने मासे फाल्गुनी चास्य पूर्णिमा ।
पावनः सिह्लके वह्नौ पूते पथ्या च पावनी ॥

चेतनो ज्ञानवान्प्राणी चेतना बुद्धिरिष्यते ।
गायनो मुखरे प्रोक्तो गीतोपजीवकेऽपि च ॥

विभिन्नं च समालब्धे विभक्ते च प्रकीर्तितम् । 1435
प्रसूनं विदुरुत्पन्नं प्रसूनं कुसुमं फलम् ॥

कौपीनं च विनिर्दिष्टमकार्यं गुह्यचीरयोः ।
कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः ॥

विमानं देवयाने स्यात्सार्वभौमे च वेश्मनि ।
प्रधानं स्यान्महामात्रमनीषापरमात्मसु ॥ 1440

समानं सत्समैकेषु समानो नाभिमारुतः ।
संस्थानमाकृतौ मृत्यौ संनिवेशे चतुष्पथे ॥

---

1432 सिके *for* सिह्लके.

1433 वुद्धिः *for* बुद्धिः.

1434 मुखनो *for* मुखरे; °जीवनेपि *for* °जीवकेऽपि.

1435 विभिन्नश्च *for* विभिन्नं च; समालब्धे *for* समालब्धे; प्रकीर्त्तितं *for* प्रकीर्तितं.

1436 प्रसूनं *for* प्रसूनं.

1437 कौपीनश्च *for* कौपीनं च; °चिरयोः *for* °चीरयोः.

1438 कौलिनं *for* कौलीनं; मुग्धे *for* युद्धे; °वपादयोः *for* °पवादयोः.

1439 विमाणं ( *before corr.* ) *for* विमानं; वेस्मनि *for* वेश्मनि.

1440 महामात्रे° *for* महामात्र°; °मनिषा° *for* °मनीषा°; °सत्वमात्मसु *for* °परमात्मसु.

1442 आहृतौ *for* आकृतौ; शंनिवेशे *for* संनिवेशे; चतुःपथे *for* चतुष्पथे.

**आदानं** ग्रहणे ज्ञेयं तुरंगाभरणेऽपि च ।
**उद्यानं** वनान्तरं स्यान्निःसृतौ च प्रयोजने ॥

**निदानं** तण्डके [ 58 ] विद्यात्कारणे व्याधिनिर्णये ।
**अम्लानं** निर्मले ज्ञेयम**म्लानं** कुसुमान्तरम् ॥

**व्युत्थानं** स्वातन्त्र्यकृत्ये विरोधाचरणेऽपि च ।
**संतानः** संततौ देववृक्षे चापत्यगोत्रयोः ॥

**अरत्निः** कफणौ हस्ते प्रकोष्ठे च तताङ्गुलौ ।
**विक्लिन्नो** जरया जीर्णे वि[illegible]र्द्रकीर्णयोः ॥

**तमोघ्ना** वह्निरवीन्दुशम्भुनारायणाः स्मृताः ।
**स्थापनं** स्यात्पुंसवनं **स्थापनं** रोपणं मतम् ॥

**राधनं** तोषणे प्राप्तौ साधने **राधनं** विदुः ।
**स्यन्दनं** क्षरणे नीरे **स्यन्दनौ** रथपादपौ ॥

---

*1443* °भरणेपि *for* °भरणेऽपि.
*1444* निश्रितौ *for* निःसृतौ; प्रयोजनिः *for* प्रयोजने.
*1445* करणे *for* कारणे.
*1446* निर्म्मले *for* निर्मले.
*1447* व्युल्याणं *for* व्युत्थानं; स्वातंत्र° *for* स्वातन्त्र्य°; °चरणेपि *for* °चरणेऽपि.
*1448* सान्तानः *for* संतानः.
*1449* कफेणौ *for* कफणौ; तथागुलौ *for* तताङ्गुलौ.
*1450* विक्रिन्नो *for* निक्लिन्नो; जवया (*before corr.*) *for* जरया; जिर्णे *for* जीर्णे; आर्द° *for* आर्द्र°.
*1451* °रविन्दु° *for* °रवीन्दु°; °शन्तु° (*before corr.*) *for* °शम्भु°.
*1452* रोपनं *for* रोपणं.
*1453* वाधनं *for* राधनं; वाधने *for* राधनं.
*1454* स्यन्दनं *for* स्यन्दनौ; °पादयौ *for* °पादपौ.

गन्धनश्चैव हिंसायामुत्साहे च प्रकाशने ।
नन्दनं स्यादिन्द्रवनं नन्दनौ पुत्रहर्षकौ ॥

केतनमायतने चिह्ने कृत्ये चोपनिमन्त्रणे ।
यापनं स्यान्निरसनं यापनं वर्तनं विदुः ॥

वासनं धूपने ज्ञाने वासनं वारिधानिका ।
कल्पनं कर्तने क्लृप्तौ कल्पना गजसज्जना ॥

देवनं व्यवहारे स्याज्जिगीषाक्रीडनादिषु ।
आसनं करिणां स्कन्धे पीठे गतिनिवर्तने ॥

शासनं नृपदत्तोर्व्यां लेखाज्ञाशास्त्रशान्तिषु ।
सेचनं रक्षणे सेके नौकासेचनभाजने ॥

कर्तनं छेदनं प्रोक्तं स्त्रीणां च सूत्रकर्शने ।
दर्शनं लोचने स्वप्ने बुद्धिशास्त्रोपलब्धिषु ।
रञ्जनं रागजननं रञ्जनं रक्तचन्दनम् ॥

---

1455 गन्धनश्चैव *for* गन्धनं चैव; उत्सहे *for* उत्साहे.

1457 आयने *for* आयतने; कृ *for* कृत्ये; °निमंत्रिणे *for* °निमन्त्रणे.

1458 जापनं *for* यापनं; जापनं ( *secod time* ) *for* यापनं; निर्वर्त्तनं *for* वर्तनं.

1459 ज्ञानं *for* ज्ञाने; वावि° *for* वारि°.

1460 कल्पणं *for* कल्पनं; कृतिमं *for* कर्तने; क्रीप्तौ *for* क्लृप्तौ; जगनन्दना *for* गजसज्जना.

1462 स्कंदे *for* स्कन्धे; °निवर्त्तने *for* °निवर्तने.

1463 शाशनं ( *before corr.* ) *for* शासनं; °दत्तोव्यां *for* °दत्तोर्व्यां

1465 कर्त्तनं *for* कर्तनं; मृतर्शने *for* सूत्रकर्शने.

1466 दर्शने *for* दर्शनं; वृद्धि° *for* बुद्धि°; °लब्धिषु *for* °लब्धिषु.

1467 °जनं *for* °जननं.

**जीवनं** जीवने तोये **जीवनी** चौषधी स्मृता ।
**अङ्गनं** प्राङ्गणे गत्या**ऽङ्गना** कामिनी स्मृता ॥

**वेष्टनं** कर्णवेष्टन्यामुष्णीषे परिवारणे ।
**धावनं** प्रगमे शौचे **धावनी** पृश्निपर्णिका ॥

**वर्धनं** छेदने वृद्धौ वारिधानी तु **वर्धनी** ।
**चन्दनं** तरुभेदः स्या**च्चन्दनं** वानरान्तरम् ॥

**मार्जनं** मार्ष्टिरुद्दिष्टा **मार्ज**[ *59* ]**नो** लोध्रपादपः ।
**सुधन्वा** तरुपादः स्या**त्सुधन्वा** देववर्धकिः ॥

**अर्यमा** रविराख्यात**श्चार्यमा** पितृदेवता ।
**सुदामा** मेघ उद्दिष्टः **सुदामा** पर्वतेऽपि च ॥

---

*1468* स्मृताः *for* स्मृता.

*1469* प्रोगने *for* प्राङ्गणे.

*1471* धारणं ( *before corr.* ) *for* धावनं; प्रागमे ( *before corr.* ) *for* प्रगमे; धारणी ( *before corr.* ) *for* धावनी; पूम्लि° ( *before corr.* ) पृश्नि°.

*1472* वर्द्धनं *for* वर्धनं; वाविधानी *for* वारिधानी; वर्द्धनी *for* वर्धनी.

*1473* वासनान्तरं *for* वानरान्तरं.

*1474* मार्जं *for* मार्जनं; मर्जिः *for* मार्ष्टिः ; उदिष्टा *for* उद्दिष्टा.

*1475* स्वधन्पा *for* सुधन्वा; °पाद *for* °पादः ; स्वधन्वा *for* सुधन्वा; °वर्द्धकि *for* °वर्धकिः.

*1477* स्वदामा *for* सुदामा; उदिष्टः *for* उद्दिष्टः ; स्वदामा *for* सुदामा; पर्वतेपि *for* पर्वतेऽपि.

दुर्णामादर्शनं ज्ञेयं दुर्णामा दीर्घकोषिका ।
कुण्डली भुजगो येन पिनद्धमपि कुण्डलम् ॥

शिखण्डी च मयूरः स्याच्छिखण्डी क्षत्रियान्तरम् ।
प्रत्यर्थी शत्रुराख्यातः प्रतिवादी च कीर्तितः ॥

कञ्चुकी भुजगः प्रोक्तः कञ्चुकी च महल्लकः ।
विषयि त्विन्द्रिये प्रोक्तं विषयी विषयान्वितः ॥

तरस्वी वेगसंयुक्तः तरस्वी बलवानपि
फलकी फलकपाणिः स्यादिन्द्रियाख्ये ऋतुस्तथा ॥

विरोचनो रवौ वह्नौ चन्द्रे प्रह्लाददानवे ।
वैरोचनो वैवस्वतो बलिर्दैत्यस्तथागतः ॥

अभिपन्नोऽपराद्धोऽभिद्रुतो ग्रस्तो विपद्गतः ।
प्रतिपन्नश्च विज्ञाते स्वीकृते च प्रकीर्तितः ॥

---

*1479* मेने *for* येन; कुंडली *for* कुण्डलं.
*1480* शीखंडी *for* शिखण्डी; स्याछिषंडी *for* स्याच्छिखण्डी.
*1481* कीर्त्तितः *for* कीर्तितः.
*1482* महाकचः *for* महल्लकः.
*1483* इन्द्रियो *for* इन्द्रिये; विषयि *for* विषयी; वीषयान्वितः *for* विषयान्वितः.
*1484* °मंयुक्तः *for* °संयुक्तः; वलवानृपि *for* बलवानपि.
*1485* °पाणीः *for* °पाणिः.
*1486* फहलादि° *for* प्रह्लाद°.
*1487* चोरौचनो *for* वैरोचनो; वलिः *for* बलिः.
*1488* अपरद्धो *for* अपराद्धो; °द्रुत *for* °द्रुतो.
*1489* अभिपन्नः *for* प्रतिपन्नः; श्वीहृते *for* स्वीकृते; प्रकीर्त्तितः *for* प्रकीर्तितः.

अनूचानो विनीतः स्यात्साङ्गवेदज्ञ एव च ।
प्रतियत्नस्तु संस्कारे उपग्रहणलिप्सयोः ॥

स्तनयित्नुः स्मृतो मेघे घनस्य स्तनितेऽपि च ।
सनातनो ध्रुवो विष्णुः पितॄणामतिथावपि ॥

कुम्भयोनिरगस्तिः स्याद्द्रोणश्च कुरुसंमतः ।
वर्धमानः शरावे स्यादेरण्डे वृद्धिमत्यपि ॥

पुण्यजनः स्मृतो यक्षे राक्षसे च प्रयुज्यते ।
महासेनः कार्तिकेये महासैन्यपतावपि ।

विष्वक्सेना प्रियङ्गुः स्याद्विष्वक्सेनो जनार्दनः ।
देवसेनेन्द्रकन्यायां सेनायां च पिनाकिनः ॥

---

*1490* विनीत *for* विनीतः; स्याः *for* स्यात् ; शांगवेदांज्ञ *for* साङ्गवेदज्ञ.

*1491* प्रतिपन्नः *for* प्रतियत्नः; °लिंपयोः *for* लिप्सयोः .

*1492* घनश्च *for* घनस्य; तलिते *for* स्तनिते.

*1493* पितृणां *for* पितॄणां.

*1495* वर्द्धमानः *for* वर्धमानः; शरेवे *for* शरावे; एवंडे *for* एरण्डे; वृर्द्धि° *for* वृद्धि°.

*1496* स्मृता *for* स्मृतो; जक्षे *for* यक्षे.

*1497* कार्त्तिकेये *for* कार्तिकेये.

*1498* विष्वक्सेनः *for* विष्वक्सेना; प्रियगु *for* प्रियङ्गुः; स्यात् *for* स्याद्.

*1499* सेनायाश्च *for* सेनायां च; पिनाकीनः *for* पिनाकिनः .

**सौदामिन्य**प्सरोभेदे विद्युद्विद्युद्विशेषयोः ।
**अभिजनो** जन्मभूमावभिजनः कुलध्वजम् ? ॥

**उदयनो** व[60]त्सराजे **उदयनं** तथोदये ।
**निशमनं** विनिर्दिष्टं दर्शने श्रवणेऽपि च ॥

**निरसनं** च हिंसायां निरासे ष्ठीवनेऽपि च ।
**विहननं** समाघाते पिञ्जने तूलधूनने ॥

**प्रवचनं** च वेदे स्यात्प्रकृष्टवचनेऽपि च ।
**निधुवनं** सुरतं स्यात्कम्पनं च प्रकीर्तितम् ॥

**प्रजननं** भगं प्रोक्तं जन्म **प्रजननं** विदुः ।
**आराधनं** तोषणं च प्राप्तावा**राधनं** विदुः ॥

**विसर्जनं** परित्यागे दाने संप्रेषणेऽपि च ।
**समादानं** नित्यकर्म सम्यगादानमिष्यते ॥

~~~~~~~~~~

*1500* सौदामिन्यःप्सरोभेदे *for* सौदामिन्यप्सरोभेदे.
*1501* जन्मभूवभिजनः *for* जन्मभूमावभिजनः; स्वयं कुलं *for* कुलध्वजं.
*1502* वत्सरार्द्धे *for* वत्सराजे.
*1503* निशयनं *for* निशमनं; शरणेपि *for* श्रवणेऽपि.
*1504* निवसनं *for* निरसनं; हिसायां *for* हिंसायां; निवासे *for* निरासे; ष्ठीवनेपि *for* ष्ठीवनेऽपि.
*1505* पिञ्जरे *for* पिञ्जने.
*1506* प्रहिष्टवचनेपि *for* प्रकृष्टवचनेऽपि.
*1507* कल्पनं *for* कम्पनं; प्रकीर्त्तितं *for* प्रकीर्तितं.
*1509* तोरणं *for* तोषणं; प्राप्तं वाराधनं *for* प्राप्तावाराधनं.
*1510* संप्रेषनेपि *for* संप्रेषणेऽपि.
*1511* संम्यग्⁰ *for* सम्यग्⁰.
~~~~~~~~~~

आस्कन्दनं समाख्यातं तिरस्कारे रणेऽपि च ।
अभिमानश्च विज्ञप्तौ गर्वे प्रणयहिंसयोः ॥

आच्छादनं संपिधानेऽप्यपवारणवस्त्रयोः ।
अवाचीनं विपर्यस्तमवाचीनमवागपि ॥

उपासनं देवसेवा बाणाभ्यास उपासनम् ।
अवदानमतिवृत्ते कर्मखण्डनयोर्मतम् ॥

सारसनमुरस्त्रे च मेखलायां च कीर्तितम् ।
अधिष्ठानं प्रभावे स्याद्रथाङ्गेऽध्यासने पुरे ॥

निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ।
समापन्नं वधे प्रोक्तं समाप्तलब्धयोस्तथा ॥

आवेशनं प्रवेशे स्यात्कोपे शिल्पिगृहेऽपि च ।
निर्वासनं मारणके नगरादेर्बहिष्कृतौ ॥

---

1512 समाख्यानं *for* समाख्यातं; रणेपि *for* रणेऽपि.

1513 गर्व *for* गर्वे; °हिसयोः *for* °हिंसयोः.

1514 आछादनं *for* आच्छादनं; संपिधानेपि *for* संपिधानेऽपि.

1515 अर्वाचिनं *for* अवाचीनं; अवाचिनं *for* अवाचीनं; अगावपि *for* अवागपि.

1516 वाणोभ्यास *for* बाणाभ्यास.

1517 अतिवर्त्त *for* अतिवृत्ते; मितं *for* मतं.

1518 सावसनं *for* सारसनं; उरसे *for* उरस्त्रे; कीर्त्तितं *for* कीर्तितं.

1519 स्यात् *for* स्याद्; तथागेध्यासने *for* रथाङ्गेऽध्यासने.

1520 निर्वातनं ( *before corr.* ) *for* निर्यातने; दान्ये *for* दाने; न्यासार्पणेपि *for* न्यासार्पणेऽपि.

1521 °लव्धयोः *for* °लब्धयोः.

1522 °गृहेपि *for* °गृहेऽपि.

1523 वहिःकृतौ *for* बहिष्कृतौ.

आतञ्चनं प्रतीवापजवनाप्यायनार्थकम् ।
आस्फोटनं स्मृतं मुद्गे आस्फोटनं विकासने ॥

प्रतिमानं प्रतिच्छायागजदन्तान्तरालयोः ।
उत्पतनं समुत्पत्तौ तथोर्ध्वगमनेऽपि च ॥

संवदनं समालोके संवदनं च वशक्रिया ।
संमूर्च्छनमभिव्याप्तिर्मूर्च्छा संमूर्च्छनं मतम् ॥

संवाहनं मर्दने स्याद्भारादेर्वाहनेऽपि च ।
उद्वाहनं द्विसीत्ये स्याद्रज्जावुद्वाहनी मता ॥

अर्घा[61]सनं स्नेहदानमर्घासनमकुत्सनम् ।
उद्वर्तनमुत्पतनमुद्वर्तनमपि घर्षणम् ॥

---

*1524* आतश्चनं *for* आतञ्चनं; प्रतिवाय° *for* प्रतीवाप°; °यावना° *for* °जवना°.

*1526* प्रतिछाया° *for* प्रतिच्छाया°; गजदांतख्यादयोः *for* °गजदन्तान्तरालयोः.

*1527* तथोर्द्धगमनेपि *for* तथोर्ध्वगमनेऽपि.

*1528* वसक्रिया *for* वशक्रिया.

*1529* संमूछनं *for* संमूर्च्छनं; अभिव्याप्ति *for* अभिव्याप्तिर्; मूर्छा *for* मूर्च्छा; संमूर्छनं *for* संमूर्च्छनं.

*1530* स्यात् *for* स्याद्; वाहनेपि *for* वाहनेऽपि.

*1531* द्विसीते *for* द्विसीत्ये; ऋजुक्तत्° *for* रज्जावुद्°.

*1532* अर्द्धासनं *for* अर्घासनं; स्नेह° *for* स्नेह°; अर्द्धासनं *for* अर्घासनं.

*1533* उद्वर्त्तनं *for* उद्वर्तनं; उद्वर्त्तनमपि *for* उद्वर्तनमपि.

**प्रणिधानं** प्रयत्ने स्यात्समाधौ तु प्रवेशने ।
**राजादनं** प्रियाले स्यात्क्षीरिकायामपि स्मृतम् ॥

**समुत्थानं** समुद्योगे व्याधीनां निर्णयेऽपि च ।
**उत्सादनमुद्वासनमुद्वाहनमुद्वर्तनम्** ॥

**संयमनं** तु नियमः **संयमनी** यमस्य पूः ।
**गवादनी**न्द्रवारुण्यां गवां घासादनालया ॥

**पयस्विनी** निशा प्रोक्ता नदीधेन्वोः **पयस्विनी** ।
**अन्तेवासी** स्मृतः शिष्यश्चाण्डालोऽपि प्रकीर्तितः ॥

**श्वेतधामा** च कर्पूरे **श्वेतधामा** च चन्द्रमाः ।
**प्रतिपादनमा**ख्यातं प्रतिदाने **प्रबोधने** ॥

**अवरोधनम**वरोधो राज्ञामन्तःपुरं गृहम् ।
**अपसर्जनमा**ख्यातं दाने संपरिवर्जने ॥

---

*1534* प्रणिधान *for* प्रणिधानं.
*1535* प्रियाल *for* प्रियाले; स्मृतः *for* स्मृतम्.
*1536* समुत्पाणं *for* समुत्थानं; निर्णयेपि *for* निर्णयेऽपि.
*1537* उद्वासनं ( *second time* ) *for* उद्वाहनं; उद्वर्त्तनं *for* उद्वर्तनं.
*1539* गवादनिद्र॰ *for* गवादनीन्द्र॰; गवा *for* गवां; क्षासा॰ *for* घासा॰.
*1540* पयस्वीनी *for* पयस्विनी; विशा *for* निशा.
*1541* अंतोवासि *for* अन्तेवासी; शीष्यः *for* शिष्यश्; चाण्डालोपि *for* चाण्डालोऽपि; प्रकीर्त्तितः *for* प्रकीर्तितः.
*1543* प्रवोधने *for* प्रबोधने.
*1545* अस्त्रुमजनं *for* अपसर्जनं; संपदि॰ *for* संपरि॰.

हरिचन्दनमाख्यातं कुसुम्भे चन्दनान्तरे ।
अभिसर्जनमित्येतद्वधे दाने प्रकाशितम् ॥

महारजनमाख्यातं कुसुम्भे काञ्चनेऽपि च ।
अभिनिष्ठान इत्येषोऽक्षरे विसर्जनीयके ॥

धूमकेतन इत्येष ग्रहभेदे हुताशने । 1550
श्वेतवाहन इत्येष कथितोऽर्जुनचन्द्रयोः ॥

हरिवाहननामानौ स्मृतौ रविपुरंदरौ ।
शालङ्कायन इत्येष मुनिभेदे च नन्दिनि ॥

गन्धमादन इत्येष गन्धके पर्वतान्तरे ।
वरवर्णिन्यपि ख्याता हरिद्रायां वरस्त्रियाम् ॥ 1555

अनुवासनमाख्यातं धूपने स्नेहकर्मणि ।
कापिशायनमिच्छन्ति देवमद्यविशेषयोः ॥



1547 अभिमर्जनं *for* अतिसर्जनं.
1548 कुशुंभे *for* कुसुम्भे; कांचनेपि *for* काञ्चनेऽपि.
1549 ईति *for* इति; विसर्जनियके *for* विसर्जनीयके.
1550 ग्रह° *for* ग्रह°.
1551 श्वेतवाहिन *for* श्वेतवाहन; ईति *for* इति.
1552 नन्दनि *for* नन्दिनि.
1554 ईति *for* इति.
1555 वरस्त्रीयां *for* वरस्त्रियां.
1556 अनुवादनं (*before corr.*) *for* अनुवासनं; °कर्म्मणि *for* °कर्मणि.
1557 इछन्ति *for* इच्छन्ति; °मद्य° *for* °मद्य°.

**अन्तावसायिनौ** सद्भिः स्मृतौ चाण्डालनापितौ ।
**जायानुजीविनौ** चैव ख्यातौ बककृशाश्विनौ ॥

॥ नश्लोकः ॥

**घनं** सान्द्रं **घनं** वाद्यं **घनो** मुस्ते **घनोऽ**म्बुदः ।
[ 62 ]**घनौ** काठिन्यसंघातौ **घनौ** विस्तारणाम्बरौ ॥

**स्थानं** स्थितौ च सादृश्ये संनिवेशावकाशयोः ।
**स्थाने**शब्दो निपातस्थो युक्तार्थः कारणार्थकः ॥

**सूनं** प्रसूतमाख्यातं क्वचित्पुष्पेऽपि दृश्यते ।
**सूना** जन्तुवधस्थाने **सूना** च गजगण्डिका ॥

**जनो** लोके **जनी** वध्वामुत्पत्तौ च **जनी** स्मृता ।
महल्लोकात्परो लोको **जन** इत्यभिशब्दितः ॥

**धनु**श्चापे राशिभेदे धामिन्याख्यद्रुमेऽपि च
उकारान्तो **धनु**शब्दो यश्च सान्तो भविष्यति ॥

~~~~~~~~~~

*1559* °जीवनौ *for* °जीविनौ; वक° *for* बक°; कृशान्वितौ *for* कृशाश्विनौ.
*1561* स्यान्द्रं *for* सान्द्रं; कुष्टे *for* मुस्ते; अम्वुदः *for* अम्बुदः.
*1562* कठिन्य° *for* काठिन्य°; संजातौ ( *before corr.* ) *for* संघातौ.
*1563* शादृस्ये *for* सादृश्ये.
*1564* °शव्दो *for* °शब्दो. निपातस्थौ *for* निपातस्थो.
*1565* मूलः ( *before corr.* ) सूनः ( *after corr.* ) *for* सूनं;
प्रसूनं *for* प्रसूतं; पुष्पेपि *for* पुष्पेऽपि.
*1566* °वधा° ( *before corr.* ) °वध°.
*1567* लोको *for* लोके; स्मृताः *for* स्मृता.
*1568* ईति *for* इति; °शव्दितः *for* °शब्दितः.
*1569* °द्रुमेपि *for* °द्रुमेऽपि.
*1570* सकारान्तो *for* उकारान्तो; °शब्दो *for* °शव्दो; शान्तो *for* सान्तो.
~~~~~~~~~~

पर्व स्यादुत्सवे ग्रन्थप्रस्तावे विषुवादिषु ।
दर्शप्रतिपदोः सन्धौ स्यात्तिथिः पञ्चकान्तरे ॥

ब्रह्म तत्त्वं तु ब्रह्मा च ब्रह्माणौ विप्रवेधसौ ।
वेदेऽपि च स्मृतं ब्रह्म ब्रह्मा योगो रवीन्दुजः ॥

आत्मा कलेवरे यत्ने स्वभावे परमात्मनि ।
चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च ॥

पक्षी वशापकः प्रोक्तः पक्षी चापि विहंगमः ।
आगामिवर्तमानाहर्युक्तायां निशि पाक्षिणी ॥

भोगी राजनि सर्पे च वैयापृत्यकरेऽपि च ।
भोगिन्य राजकामिन्यः संगृहीताश्च योषितः ॥

नन्दी हरप्रतीहारे नान्दिनी सुरभिः मता ।
.... ... .... ... .... ... ... ॥

1571 पर्वः *for* पर्व; स्यात्वत्सरे *for* स्यादुत्सवे; °प्रस्तारे *for* °प्रस्तावे.

1573 ब्रह्म तत्वं *for* ब्रह्म तत्त्वं; ब्रह्मा *for* ब्रह्मा; ब्रह्माणौ *for* ब्रह्माणौ.

1574 वेदेपि *for* वेदेऽपि; ब्रह्म *for* ब्रह्म; ब्रह्म (*second time*) *for* ब्रह्मा.

1576 *Add* च *after* धृतौ; बुद्धौ *for* बुद्धो; °व्यावर्त्तनेपि *for* °व्यावर्तनेऽपि.

1577 पक्षि *for* पक्षी.

1578 आगामी° ( *before corr.* ) *for* आगामि°.

1579 राजजनि ( *before corr.* ) *for* राजनि; वैयापूत्यकरेपि *for* वैयापृत्यकरेऽपि.

1580 भोगीना *for* भोगिन्य.

1581 °प्रतिहारे *for* °प्रतीहारे; नन्दनी *for* नन्दिनी; स्मृताः *for* स्मृता.

**मालिनी** जाह्नवी प्रोक्ता मालाकारी च **मालिनी** ।
... ... ... ... ... ... ... ... ...॥

**पिशुनो** नारदः प्रोक्तः **पिशुनौ** खलसूचकौ ।
**पिशुना** कथिता पृक्का **पिशुनं** कुङ्कुमं स्मृतम् ॥

**व्यसनश्चा**शुभे पापे पानस्त्रीमृगयादिषु ।
दैवानिष्टफले सक्तौ विपत्तिभ्रंशयोरपि ॥

मन्दचेष्टे **वितानः** स्याद्वितानं वस्त्रवेश्मनि ।
**वितानः** कथितो यज्ञे शून्यविस्तारयो[ *63* ]रपि ॥

**उत्थानं** गृहवास्त्वन्ते स्या**दुत्थानं** च पौरुषे ।
उद्योगेऽपि च **उत्थानं** तन्त्रे **उत्थान**मुद्गतौ ॥

**अर्जुना**स्तृणवृक्षाक्षिरोगभेदास्त**थार्जुनाः** ।
सितपार्थकार्तवीर्याः करतो**यार्जुनी** च गौः ॥

---

*1583* मालाकारि *for* मालाकारी.
*1585* खंल° *for* खल°.
*1586* पूक्का *for* पृक्का.
*1587* च° *for* चा°; पर° *for* पान°.
*1588* दैवानीषु° *for* दैवानिष्ट°; शक्तौ *for* सक्तौ.
*1589* °वेस्मनि *for* वेश्मनि.
*1590* शुन्य° *for* शून्य°.
*1591* उथानं *for* उत्थानं; °वास्त्वन्तु *for* °वास्त्वन्ते; स्याल्यानं *for* स्यादुत्थानं.
*1592* उद्योगेपि *for* उद्योगेऽपि; उथानं *for* उत्थानं; मुथानं *for* उत्थानं.
*1593* °वृक्षाणिरोग° *for* °वृक्षाक्षिरोग°; तथार्युना *for* तथार्जुनाः.
*1594* °कार्त्तवीर्य *for* °कार्तवीर्याः.

**सज्जनं सज्जनश्चैव सज्जना** त्रितयं क्रमात् । 1595
घट्टाख्ये गुल्मके साधौ हस्तिपर्याणके मतम् ॥

**अञ्जनं** कज्जलं चाक्तु**रञ्जना** मारुताङ्गना ।
**अञ्जनो** दिग्गजः शैलोऽप्य**ञ्जनं** स्याद्रसाञ्जनम् ॥

**साधनं** मृतसंस्कारे सैन्ये मेढ्रे वधे धने ।
निवृत्ते दापने सिद्धावुपायेऽनुगमे गतौ ॥ 1600

**व्यञ्जनं** तेमने चिह्ने श्मश्रुणि **व्यञ्जनं** स्मृतम् ।
स्त्रीपुंसशुद्धदेशे च **व्यञ्जनं** चार्धमात्रिकम् ॥

**स्रंसनं** के निपाते च पृथग्भावे क्रमात्स्मृतौ ।
भेदनेनसमायुक्तावतिसारे च कीर्तितः ॥

**काञ्चनं** कनके प्रोक्तं चम्पके नागकेशरे । 1605
धूस्तूरे **काञ्चनं** प्राहुर्हरिता **काञ्चनी** स्मृता ॥

---

*1595* सर्जनं ( *before corr.* ) *for* सज्जनं; सजनः ( *before corr.* ) *for* सज्जनः; सजने ( *before corr.* ) सज्जने ( *after corr.*) *for* सज्जना.

*1596* घट्टमुख्ये *for* घट्टाख्ये; °पर्यानके *for* °पर्याणके.

*1597* वक्तिर् *for* चाक्तुर्.

*1598* शैलोपि *for* शैलोऽपि.

*1599* मैत्र *for* मेढ्रे; वधो *for* वधे; धसे *for* धने.

*1601* तेलने *for* तेमने; श्वश्रुनि *for* श्मश्रुणि.

*1602* चार्द्ध° *for* चार्ध°.

*1603* शंशनं *for* स्रंसनं.

*1604* अतीसारे *for* अतिसारे; कीर्त्तितः *for* कीर्तितः.

*1606* प्रहु *for* प्राहुर्.

**ललाम** कथितं रश्मिप्रधानध्वजवाजिषु ।
भूषाप्रभावशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु ॥

**तपस्वी** चानुकम्पार्हस्**तपस्वी** स्यात्तपोधने ।
**तपस्विनी** च मांसी स्यात्कुनखा च **तपस्विनी** ॥

**कात्यायन्य**र्धवृद्धा या काषायवसनाधवा ।
उमा **कात्यायनी** प्रोक्ता कश्चित्**कात्यायनो** मुनिः ॥

**घनाघनो** वर्षुकाब्दे शक्रे च मत्तहस्तिनि ।
अन्योन्यघटने चैव घातके च **घनाघनः** ॥

**सुदर्शनं** हरेश्चक्रमोषधिश्च **सुदर्शना** ।
**सुदर्शनं** पुरं चैन्द्रं मेरुजम्बुः **सुदर्शनः** ॥

**वृक्षादनः** कुठारः स्यात्पियालाख्यो द्रुमो [ 64 ]ऽपि सः ।
**वृक्षादनी** स्मृता वन्दा विदारीगन्धिका च सा ॥

---

1607 °वादिषु *for* °वाजिषु.
1609 अनुकंपाहः *for* अनुकम्पार्हः.
1611 अर्द्धवृर्द्धा *for* अर्धवृद्धा; याः *for* या; अधरा *for* अधवा.
1613 °अऽदे *for* °अब्दे; माहस्तनी (*before corr.*), मत्तहस्तनि (*after corr.*) *for* मत्तहस्तिनि.
1615 हरे *for* हरेश्च; ओषधीश्च *for* ओषधिश्च.
1616 मेरूजंबु *for* मेरुजम्बुः.
1617 स्या *for* स्यात्; पिञ्चालाख्यः *for* पियालाख्यः.
1618 त्रिंदा *for* वन्दा; विदरीवनिका *for* विदारीगन्धिका.

पद्मलाञ्छन उद्दिष्टो ब्रह्मा लोकेश्वरो हरिः ।
स्यात्पद्मलाञ्छना तारा लक्ष्मीः स्यात्पद्मलाञ्छना ॥ 1620

॥ इति नान्तवर्गः ॥

॥ [ पपादः ] ॥

शापः शपथ आक्रोशे त्रपु सीसकरङ्गयोः ।
रोपश्च रोपणे बाणे बाष्प उष्मणि चाश्रुणि ॥

रेपः स्यादधमे क्रूरे क्षुपः स्पर्शे क्षुपे तथा । 1625
कृपा दया कूपो व्यासो वपा विवरमेदसोः ॥

प्रतापस्तेजसि स्वेदे विकल्पौ पक्षसंशयौ ।

---

*1619* पद्मानांजन *for* पद्मलाञ्छन; उदिष्टो *for* उद्दिष्टो; व्रह्म *for* ब्रह्मा; लोकेश्वरे *for* लोकेश्वरो.

*1620* पद्मलांञ्छना *for* पद्मलाञ्छना; तावा *for* तारा; लक्ष्मी *for* लक्ष्मीः ; पद्मलांञ्शनाः ; *for* पद्मलाञ्छना.

*1621* नान्तः समाप्तः *for* इति नान्तवर्गः.

*1622* *Add* पपादः.

*1623* शापश्चाक्रोशे *for* शपथ आक्रोशे; त्रपुं *for* त्रपु.

*1624* रोपने *for* रोपणे; वाणे *for* बाणे; वाष्प *for* बाष्प ; चाश्रुणी *for* चाश्रुणि.

*1625* वेपः *for* रेपः ; क्रुरे *for* क्रूरे; पूपः *for* क्षुपः ; क्षुते *for* क्षुपे.

*1626* कृपा (*before corr.*) *for* कूपो; व्यासे *for* व्यासो; वेपा (*before corr.*) *for* वपा; °मेधसोः (*before corr.*) *for* °मेदसोः.

*1627* तेजसी *for* तेजसि; °संशयौः *for* °संशयौ.

**आकल्पः** कल्पने वेशे **उडुपश्चन्द्र**भेलयोः ।
**परिकम्पो** भये कम्पे **वृषाकपी** हरीश्वरौ ॥

॥ पार्धश्लोकः ॥

**कल्पः** शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने ।
**कूपो** नौगुणवृक्षे स्याद्गर्तोदपानयोरपि ॥

**तल्पो**ऽपि शयनीये स्यात्तल्पमङ्कलत्रयोः ।
**सूपो** व्यञ्जनभेदः स्यात्सूपोऽपि सूपकारकः ॥

**लेपः** प्रलेपने जग्धौ सुधा **लेपः** प्रकीर्तितः ।
**स्वापः** स्पर्शाज्ञता निद्रा **स्वापश्**चाज्ञानमात्रकम् ॥

**तापौ** हृत्तापसंतापौ **तापी** नद्यन्तरे स्मृता ।
**पुष्पं** स्त्रीरजसि ज्ञेयं प्रसूनप्रविकाशयोः ॥

---

1628 °भेनयोः *for* °भेलयोः.
1629 परिकल्पो *for* परिकम्पो; कल्पे *for* कम्पे.
1630 पार्द्धः *for* पार्धश्लोकः.
1631 संवर्त्ते *for* संवर्ते; व्रह्मणो *for* ब्रह्मणो.
1632 क्तपौ (*before corr.*) कूपौ (*after corr.*) *for* कूपो; स्याद् *for* स्याद्; गर्त्तोद° *for* गर्वोद°.
1633 तल्पोपि *for* तल्पोऽपि; अङ्ग° *for* अङ्क°.
1634 व्यजन° *for* व्यञ्जन°; सूपोपि *for* सूपोऽपि; सूपकारको: (*before corr.*) सूपकारके: (*after corr.*) *for* सूपकारकः.
1635 प्रकीर्त्तितः *for* प्रकीर्तितः.
1636 स्पर्शादगता *for* स्पर्शाज्ञता.
1637 °संपातौ *for* °संतापौ; मत्यन्तरे *for* नद्यन्तरे.

शष्पं वालतृणं प्रोक्तं शष्पं स्यात्प्रतिभाक्षयः ।
कलापः संहतौ बर्हे काञ्चितूणीरयोरपि ॥

आवापो भाण्डवपने परिक्षेपालवालयोः ।
विटपः पल्लवे स्तम्बे शाखायां विटपो मतः ॥

आक्षेपः स्यादुपक्षेपे काव्यालंकारनिन्दयोः ।
परीवापः परिक्षेपे पर्याप्तौ सलिलस्थितौ ॥

अवलेपः स्मृतो गर्वे दूषणे लेपनेऽपि च ।
उपतापो गदे तापे त्वरायामपि दृश्यते ॥

......स्याद्रा [ 65 ] क्षसे च प्रयुज्यते ।
हेमपुष्पश्च च कविभिश्चम्पकाशोकयोरपि ।
बहुरूपौ विष्णुरुद्रौ स्मृतौ सरटधूनकौ ॥

॥ पश्लोकः ॥

रूपमाका ... ... ....।
ग्रन्थावृत्तौ पशौ शब्दे नाटकादिस्वभावयोः ॥

~~~~~~~~~~

1639 स्वल्पं *for* शष्पं; वालतृणां *for* बालतृणं; शल्पं *for* शष्पं.

1640 वर्हे *for* बर्हे.

1641 भांड ... वलेपपालवानयोः *for* भाण्डवपने परिक्षेपालवाल्योः.

1642 स्तंवे *for* स्तम्बे.

1643 उपःक्षेपे *for* उपक्षेपे.

1645 अवलपः *for* अवलेपः ; दुषणा *for* दूषणे; लेपनेपि *for* लेपनेऽपि.

1647 The text is corrupt. Ilreads as; •कालापोमागिभांगे; स्यात् *for* स्याद्.

1648 करिभि *for* कविभि.

1649 वहुरूपौ *for* बहुरूपौ; मरट° *for* सरट°; °धूपकौ *for* °धूनकौ.

1652 सनैः *for* पशौ; शव्दे *for* शब्दे; नाटवादि° *for* नाटकादि°; °त्पभारयोः *for* °स्वभावयोः.
~~~~~~~~~~

**गोपो** गोष्ठपतिर्गोधुग्ग्रामौघाधिकृतस्तथा ।
**गोपी** तु सारिवा प्रोक्ता **गोपी** स्याद्रक्षिकापि च ॥

**कुतपो** वाद्यविन्यासे दर्भकालप्रभेदयोः ।
छागरोममयं केचित्कम्बलं **कुतपं** विदुः ॥

**कशिपू** सद्भिरेकोक्त्या भोजनाच्छादने तु तत् ।
एकैकशोऽपि **कशिपुर्**भोजनाच्छादने प्रति ॥

॥ इति पान्तवर्गः ॥

॥ [ फार्धश्लोकः ] ॥

**गुम्फो** बाहोरलंकारे **गुम्फो** ग्रन्थनमात्रकम् ।
**शफं** खुरे गवादीनां मूले चापि प्रकीर्तितम् ॥

॥ इति फान्तवर्गः ॥

॥ बपादः ॥

---

*1653* गोधुक् *for* गोधुग्; ग्रामौगाधिकृतः *for* ग्रामौघाधिकृतः.

*1654* गोपि *for*; गोपी; सारिका *for* सारिवा.

*1655* दर्भे° *for* दर्भ°.

*1656* °रोमभयं *for* °रोममयं; केचित *for* केचित्; कलम्वँ *for* कम्बलं.

*1657* कशिपूः *for* कशिपू; सद्भिरित्यके *for* सद्भिरेकोक्त्या; भोजनछादने *for* भोजनाच्छादने.

*1658* एकैकशोपि *for* एकैकशोऽपि; कशिपूर् *for* कशिपुर्; भोजनाछादने *for* भोजनाच्छादने.

*1059* पश्लोकः समाप्तः *for* इति पान्तवर्गः.

*1660* *Add* फार्धश्लोकः.

*1661* वर्होवलंकारे *for* बाहोरलंकारे; ग्रुंफो *for* गुम्फो.

*1662* सफं *for* शफं; सूले *for* मूले; प्रकीर्तितः *for* प्रकीर्तितम्.

*1663* फः समाप्तः *for* इति फान्तवर्गः.

*1664* वपादः *for* बपादः.

खर्बः संख्यान्तरे ह्रस्वे द्विजिह्वः पन्नगे खले ।
कादम्बो विशिखे वाने कदम्बः पक्षिबाणयोः ॥

॥ बार्धश्लोकः ॥

डिम्बः स्याद्विप्लवप्लीह्वोऱ्याप्तेऽपि डिम्बमिष्यते ।
शम्बः स्यान्मुषलाग्रस्थलोहमण्डलके पवौ ॥

स्तम्बो गुच्छे कुशादीनामप्रकाण्डद्रुमेऽपि च ।
कम्बू कुञ्जरशम्बूकौ कम्बुर्वलयशङ्खयोः ॥

जम्बुः सुमेरुनद्यां स्याद्द्वीपद्रुमविशेषयोः ।
कम्बिर्मुखे च वंशे स्यात्खजायां च प्रकीर्तिता ॥

---

1665 खर्वः *for* खर्बः; द्विजिह्वः *for* द्विजिह्वः; पुन्नगे *for* पन्नगे.

1666 कडंवो *for* कादम्बो; विशिखो *for* विशिखे; कदंवः *for* कदम्बः; °वाणयोः *for* °बाणयोः.

1667 वार्द्धः *for* बार्धश्लोकः.

1668 डिंवः *for* डिम्बः ; विप्लीव° *for* विप्लव°; प्लीहो *for* प्लीह्वोर् ; व्याप्तेपि *for* व्याप्तेऽपि; डिवं *for* डिम्बं.

1669 शंवः *for* शम्बः; मृषणाग्रंथ° *for* मुषलाग्रस्थ°; परौ *for* पवौ.

1670 स्तंवो *for* स्तम्बो; गुछे *for* गुच्छे; कृशादीनां *for* कुशादीनां; °द्रुमेपि *for* °द्रुमेऽपि.

1671 कंवुः *for* कम्बू ; °संवूकौ *for* °शम्बूकौ; कंवुः *for* कम्बुः; °शेखयोः *for* °शङ्खयोः.

1672 जंवुः *for* जम्बुः; स्यात् *for* स्याद्; जंवुद्वीप° *for* द्वीपद्रुम°.

1673 कंविः *for* कम्बिः; खजायाश्च *for* खजायां च; प्रकीर्त्तिता *for* प्रकीर्तिता.

**चार्वी** च शोभना ज्ञेया **चार्वी** बुद्धिरुदाहृता ।
**दर्विः** सर्पफणायां च खजाका **दर्विरि**ष्यते ॥

**गर्वो**ऽभिमानेऽवलेपे **गर्वो**ऽनुरञ्जकस्तु यः ।
**पूर्वे** स्युः पूर्वकाः **पूर्वो** जातः प्राक्पूर्वजाग्रतः ॥

**श्रुबः श्रुबा** च श्रुग्भेदे मूर्वायां शल्लकी **श्रुबा** ।
**हेरम्बो** महिषः ख्यातो **हेरम्बो** विघ्ननायकः ॥

**कदम्बः** सर्षपे नीपे **कदम्बं** निकु[ 66 ]रुम्बकम् ।
**नितम्बो** जघने सानौ **नितम्बं** स्कन्धरोधसोः ।
**गजाह्वं** हस्तिनपुरं **गजाह्वा** करिपिप्पली ॥
॥ बश्लोकः ॥

... ... ... ...
... ... ... **बिम्बं** स्याद्बिम्बिकाफले ॥

---

1674 चार्वी *for* चार्वी; चार्वी ( *second time* ) *for* चार्वी; बुद्धिरूदाहृता *for* बुद्धिरुदाहृता.

1675 दर्विः *for* दर्विः; °फणायाश्च *for* °फणायां च; दर्विरिष्यते *for* दर्विरिष्यते.

1676 गर्वौ *for* गर्वो; ऽभिमानोवलेपे *for* ऽभिमानेऽवलेपे; गर्वोनु° *for* गर्वोऽनु°; घः *for* यः.

1677 पूर्वे *for* पूर्वे; पूर्वा *for* पूर्वो; प्राक *for* प्राक्.

1678 श्रुवः *for* श्रुबः; श्रुवा *for* श्रुबा; सूर्वायां *for* मूर्वायां; श्रुवा *for* श्रुवा.

1679 हेरंवो *for* हेरम्बो; हेरंवो (*second time* ) *for* हेरम्बो.

1680 कदंवः *for* कदम्बः; कदंवं *for* कदम्बं; निकुरूंवकं *for* निकुरुम्बकं.

1681 नितंवो *for* नितम्बो; नितंवं *for* नितम्बं; स्कंद° *for* स्कन्ध°.

1682 गजाह्वं *for* गजाह्वं; गजाह्वा *for* गजाह्वा.

1683 वश्लोकः *for* बश्लोकः.

1685 विंवं *for* बिम्बं; विविका° *for* बिम्बिका°.

ध्रुवः शिवे स्याद्वसुयोगभेदयो
र्नित्ये च कीले च वटद्रुमे च ।
स्रुग्गीतिभेदावपि ? सालपर्णिका
ध्रुवा स्मृता निश्चिततर्कयोर्ध्रुवम् ॥

गन्धर्वः पशुभेदे स्याद्गन्धर्वः खेचरे हये ।
अन्तराभवसत्वे च गन्धर्वो गायनेऽपि च ॥

॥ इति बान्तवर्गः ॥

॥ भपादः ॥

भूः पृथिव्यां स्थानमात्रे निभो व्याजसदृक्षयोः ।
प्रभुर्नित्ये प्रभुः शब्दे स्वभूर्गोविन्दवेधसोः ॥

---

1686 ध्रुवः ( *before corr.* ) *for* ध्रुबः; स्यादुःख° *for* स्याद्वसु°.

1687 घंटे च द्रुमे *for* वटद्रुमे च.

1688 *Add* स्रुग्गीति *before* भेदावपि; सालपर्णाका *for* सालपर्णिका.

1689 ध्रुवा *for* ध्रुबाः; °तर्कयो *for* °तर्कयोर्; ध्रुवं ( *before corr.* ) *for* ध्रुवं.

1690 गंधर्वः *for* गन्धर्वः; स्यात् *for* स्याद्; गंधर्वः *for* गन्धर्वः.

1691 *Omit* सत्वे च *after* अन्तराभवसत्वे च; गंधर्वो *for* गन्धर्वो; गायनेपि *for* गायनेऽपि.

1692 वान्तः समाप्तः *for* इति बान्तवर्गः.

1695 शब्दे *for* शब्दे; °वेधसो *for* °वेधसोः.

**शुभो** योगे **शुभं** क्षेमे **डिम्भः** शिशौ च बालिशे ।
**शम्भुर्**र्हच्छिवो ब्रह्मा **स्तम्भः** स्थूणाजडत्वयोः ॥

**जृम्भे** जृम्भणविकासे **रम्भा** वारयोषाप्सराः ।
**सनाभिः** सदृशे ज्ञातावात्मभूः स्मरवेधसोः ।
**ककुभ्** शास्त्रे दिशि ज्ञेया **अनुष्टुब्** वाचि छन्दसि ॥

॥ भार्धश्लोकः ॥

**गर्भे** भ्रूणे विजानीयाज्जठरार्भकयोरपि ।
**जम्भो** दन्ते च जम्बीरे **जम्भो** भक्षणदैत्ययोः ॥

**नाभी** प्राण्यङ्गराजन्यौ चक्रान्तचक्रवर्तिनौ ।
**सभा** सभ्याः **सभा** गोष्ठी **सभा** द्यूतं **सभा** गृहम् ॥

**विष्कम्भं** स्यात्परिष्टम्भे योगे च चन्द्रसूर्ययोः ।
**विष्टम्भः** प्रतिबन्धे स्याद्विस्तारे च प्रकीर्तितः ॥

---

*1696* वानिशे *for* बालिशे.

*1697* शंभुर्वर्हनः *for* शम्भुरर्हच्; शीवो *for* छिवो; व्रह्मा *for* ब्रह्मा; स्तंभुः *for* स्तम्भः ; स्तूला° *for* स्थूणा°; °जलद्वयोः *for* °जडत्वयोः.

*1698* जृंभा *for* जृम्भे; जृभन° *for* जृम्भण°; वारजोषा° *for* वारयोषा°.

*1699* सनाभि *for* सनाभिः.

*1700* ककुभः *for* ककुभ्; दिशे *for* दिशि.

*1701* भार्द्धः *for* भार्धश्लोकः.

*1702* गर्भः *for* गर्भे; भ्रुणे *for* भ्रूणे.

*1703* शुभो *for* जम्भो; जतौ *for* दन्ते; जंवीरे *for* जम्बीरे.

*1704* चक्रांतः° *for* चक्रान्त°; °वर्त्तिनौ *for* °वर्तिनौ.

*1705* सखा *for* सभ्याः ; द्युतं *for* द्यूतं.

*1706* स्या *for* स्यात् ; परिष्कंभे *for* परिष्टम्भे.

*1707* प्रतिवंधे *for* प्रतिबन्धे; प्रकीर्त्तितः *for* प्रकीर्तितः.

आरम्भं युद्धमिच्छन्ति चारम्भः समुपक्रमः ।
विश्रम्भशब्दमिच्छन्ति विश्वासे प्रणये वधे ॥

कुसुम्भं कुसुम्भहेम्नोः कुसुम्भस्तु कमण्डलौ ।
वैदर्भो राजभेदे स्याद्वैदर्भं वाचि वक्रिमा ॥

दुन्दुभिर्दिति [ 67 ] जे भेर्यामक्षविन्दुत्रिकद्वये ।
वर्षाभूर्दर्दुरे ख्यातो वर्षाभूश्च पुनर्नवा ॥

गर्दभी क्षुद्ररोगे स्याद्गर्दभः कैरवे खरे ।
ककुभोऽर्जुनवृक्षेऽपि वीणाङ्गरागभेदयोः ।
करभो मणिबन्धादिकनिष्ठान्ते तथोष्ट्रके ॥

॥ भश्लोकः ॥

कुम्भौ समाध्यन्तर राशिभेदौ
कुम्भो घटे वारणगण्डपिण्डे ।
कुम्भं स्मृतं गुग्गुलकेऽथ कुम्भी
स्यात्कट्फले पाटलिवारिपर्ण्योः ॥

---

*1708* इछंति *for* इच्छन्ति; सदुपक्रमः *for* समुपक्रमः.

*1709* विषंभःशब्दं *for* विश्रम्भशब्दं; इछन्ति *for* इच्छन्ति; प्रण *for* प्रणये.

*1710* कुसुंम° *for* कुसुम्भ°.

*1712* दुंदुभीः *for* दुन्दुभिः ; देर्यां *for* भेर्यां; °विन्दु° *for* °बिन्दु°.

*1713* वर्षाभू *for* वर्षाभूर् ; पुनर्णवा *for* पुनर्नवा.

*1714* गर्द्धभी *for* गर्दभी; स्या *for* स्याद्; गंर्धभः *for* गर्दभः.

*1715* कुकुभो *for* ककुभो; °वृक्षेपि *for* °वृक्षेऽपि; विणांग° *for* वीणाङ्ग°; °नाल° *for* °राग°.

*1716* मणिवंधादि° *for* मणिबन्धादि°.

*1720* गुग्गुलकेथ *for* गुग्गुलकेऽथ

*1721* पेटलि° *for* पाटलि°.

**सुरभिर**यमुदीर्णश्चैत्रमासे वसन्ते
सति च **सुरभि**रुक्तो धीरविख्यातयोश्च ।
**सुरभि** गदितमेतत्सुन्दरे साधुगन्धे
**सुरभि**रियमुदीर्णा गौः सुरा शल्लकी च ॥

**ऋषभ**स्तु बलीवर्दे श्रेष्ठे गीते स्वरान्तरे ।
अष्टवर्गौषधीमध्ये **ऋषभः** पर्वतान्तरे ॥

॥ इति भान्तवर्गः ॥

॥ मपादः ॥

**शमी** सक्तुफला शिम्ब्रा **चौमा** दुर्गातसी स्मृता ।
**सूक्ष्मो**ऽणुः **सूक्ष्म**मध्यात्मं **जिह्मः** कुटिलमन्दयोः ।

~~~~~~~~~~

*1722* उदिर्णः (*before corr.*) *for* उदीर्णः.
*1723* सुरभीः (*before corr.*) *for* सुरभिः; धिर° (*before corr.*) *for* धीर°; °विष्यातयोश्च (*before corr.*) *for* °विख्यातयोश्च.
*1724* सुरभी (*before corr.*) *for* सुरभि.
*1725* सुरभिवयषि (*before corr.*) *for* सुरभिरियमूदीर्णा, (*after corr.*) *for* सुरभिरियमुदीर्णा; गौ (*before corr.*) *for* गौः; सुर (*before corr.*) *for* सुरा.
*1726* वलीवर्द्धे *for* वलीवर्दे; श्रेष्टे *for* श्रेष्ठे.
*1727* अष्टवर्गोषधी° *for* अष्टवर्गौषधी°.
*1728* भः समाप्तः *for* इति भान्तवर्गः.
*1730* शिंवा *for* शिम्ब्रा; दुर्गासती *for* दुर्गातसी.
*1731* अनुः *for* अणुः; अध्यात्म्यं *for* अध्यात्मं.
~~~~~~~~~~

भीष्मो भयानके क्षत्रे रश्मिः स्यात्प्रग्रहे घृणौ ।
क्रमः शक्तौ परिपाट्यां भौमावङ्गारकाम्बरौ ॥

भूमिभुवौ स्थानमात्रे जामिः स्वसृकुलस्त्रियोः ।
खर्मं स्यात्पौरुषे क्षौमे आमोऽपक्वे गदान्तरे ॥

श्यामो दमनके श्यामे क्षौमं पट्टदुकूलयोः ।
प्रक्रमोऽवसरे क्रान्तौ विभ्रमो भ्रान्तिहावयोः ॥

प्रथमौ तु प्रधानादी अधमो हीनगर्ह्ययोः ।
कुसुमे स्त्रीरजःपुष्पे तलिमे तल्पकुट्टिमौ ॥

॥ मार्धश्लोकः ॥

मः शिवो मा तु लक्ष्मीः स्यान्मा निषेधेऽव्ययं स्मृतम् ।
किंशब्द इष्यते क्षेपे प्रश्ने कुत्सावितर्कयोः ॥

---

1732 रस्मि *for* रश्मिः; स्या *for* स्यात् ; प्रग्रहे *for* प्रग्रहे.
1733 अंगरकांवरौ *for* अङ्गारकाम्बरौ.
1734 भूमीभूमौ *f0r* भूमिभुवौ; यामिः *for* जामिः; °कुले° *for* °कुल°.
1735 धर्मं *for* खर्मं; अपङ्के *for* अपक्वे.
1736 ध्यामो *for* श्यामो; सदनके *for* दमनके; स्यामे *for* श्यामे;
पट्टदुकूलयोः *for* पट्टदुकूलयोः.
1737 प्रक्रमेवत्सरे *for* प्रक्रमेऽवसरे.
1738 हिन° *for* हीन°; °गह्ययोः *for* °गर्ह्ययोः.
1739 कुसुमो *for* कुसुमे; तलिने *for* तलिमे.
1740 मार्द्धः *for* मार्धश्लोकः.
1741 शिरो *for* शिवो; स्यात् *for* स्यान् ; निषेधेव्ययं *for* निषेधेऽव्ययं.
1742 किमूशव्दः *for* किंशब्दः; ईष्यते *for* इष्यते; क्षेमे *for* क्षेपे.

हि [ *68* ] **मं** चन्दनमाख्यातं **हिमं** शीततुषारयोः ।
**क्षेमं** शुभे च गोरक्षे गन्धे लब्धानुरक्षणे ॥

**तोक्मं** स्मृतं हरिन्मात्रे **तोक्मश्च** हरितो यवः ।
**भ्रमोऽ**म्भोनिर्गमे भ्रान्तौ कुन्दाख्ये शिल्पयन्त्रके ॥

**द्रुमस्त**रौ पारिजाते **द्रुमः** किंपुरुषेऽपि च ।
**दमो** दण्डः समाख्यातो **दम** इन्द्रियनिग्रहः ॥

**गमो** द्यूतप्रभेदः स्यादपर्यालोकिते **गमः** ।
**क्रमिः** कीटश्च लाक्षा च **क्रमिश्च** क्रमिले खरे ॥

**नेमिः** कूपस्य वीनाहे चक्रान्ते तिनिशद्रुमे ।
**भीमो** भयानके ख्यातो **भीमौ** शंकरपाण्डवौ ॥

**घर्मः** स्वेदाम्भसि ग्रीष्मे उष्णे स्यादातपेऽपि च ।
**गुल्मः** स्याद्विटपे घट्टे रोगसैन्यविशेषयोः ॥

~~~~~~~~~~~

1743 *Drop* हि *before first* हिमं; °तुखारयोः ( *before corr.* ) *for* °तुषारयोः.
1744 गोरक्षो *for* गोरक्षे; लब्धानु° *for* लब्धानु°.
1745 तोकं *for* तोक्मं.
1746 °निर्गम *for* °निर्गमे.
1747 किंपुरुषेपि *for* किंपुरुषेऽपि.
1748 ईन्द्रिय° *for* इन्द्रिय°.
1750 मुनिः *for* क्रमिः; खरः *for* खरे.
1751 नेमीः *for* नेमिः; तिलिश *for* तिनिशद्रुमे.
1753 आतपेपि *for* आतपेऽपि.
1754 घटे *for* घट्टे.
~~~~~~~~~~~

**समा** वर्षे **समं** तुल्यं **समं** साधु **समं** सदृक् ।
**क्षमा** तितिक्षा योग्ये च **क्षमं** शक्ते हिते **क्षमम्** ॥

**सीमा** च कथिता क्षेत्रे चाघाटे च स्थितावपि ।
**लक्ष्मी**रोषधिभेदे स्यात्पद्मासंपत्तिकान्तिषु ॥

**गोलोमी** श्वेतदूर्वायां तथेन्द्रजविसे हणे ? ।
**प्रतिमा** स्यात्प्रतिकृतौ दन्तमध्ये गजस्य च ॥

**दुर्नामा** दीर्घकोषी स्यान्नाम यस्याश्च कुत्सितम् ।
**सुषमा** परमा शोभा **सुषमं** सुन्दरं समम् ॥

**परमं** स्यादनुज्ञानं चाव्ययं **परमः** परे ।
**निगमः** कथितो वेदे नगरे च वणिक्पथे ॥

**कलमो** लेखनी चैव शालीनां वाचकः पृथक् ? ।
**नियम**स्तु प्रतिज्ञायां यन्त्रणे निश्चये व्रते ॥

**विक्रमः** शक्तिसंपत्तिः क्रान्तिमात्रं च **विक्रमः** ।
**संक्रमः** क्रमणे सम्यग्वारिसंचारवस्तुनि ॥

~~~~~~~~

*1755* समा ( *second time* ) *for* समं; समां *for* समं; शद्दक् *for* सदृक्.
*1756* सुक्ते *for* शक्ते.
*1758* पद्म° *for* पद्मा°.
*1759* °दुर्वायां *for* °दूर्वायां.
*1761* दिर्घकोषी *for* दीर्घकोषी.
*1762* सुखमं *for* सुषमं.
*1764* वनिक्° *for* वणिक्°.
*1767* क्षान्तिमात्रश्च *for* क्रान्तिमात्रं च.
*1768* सम्यग्राशि° *for* सम्यग्वारि°.
~~~~~~~~

**निष्क** [ *69* ] **मो** निर्गमे ख्यातो बुद्धिसंपदि **निष्क्रमः** ।
**आगमो** मूलशास्त्रेऽपि स्यादागमन**मागमः** ॥

**नैगमः** स्याद्वणिज्यायां वणिङ्नागरयोरपि ।
**विद्रुमस्तु** समुद्रोत्थे प्रवाले रत्नवृक्षके ॥

**संभ्रमं** भ्रममिच्छन्ति भयं संवेगमादरम् ।
**आश्रमो** ब्रह्मचर्यादा**वाश्रमो** मठ इष्यते ॥

**सत्तमः** कथितः श्रेष्ठः साधीयानपि **सत्तमः** ।
**सुषीमः** शिशिरे ख्यातश्चारौ च पन्नगान्तरे ॥

**पञ्चमो** रागभेदे स्यात्पञ्चानां पूरणोऽपि यः ।
**व्यायामः** पौरुषे माने **व्यायामश्च** परिश्रमः ॥

**अनुपमा**पि दिङ्नागहस्तिनी मातुला च या ।
**पराक्रमश्च** सामर्थ्ये विक्रमोद्यमयोरपि ॥

**प्लवंगमः** स्मृतो भेके वानरे च **प्लवंगमः** ।
**महापद्मो** निधौ दृष्टः संख्यानागविशेषयोः ॥

---

*1769* निःक्रमो *for* निष्क्रमो; निर्गम *for* निर्गमे; वंधिसंपद *for* बुद्धिसंपदि; निःक्रमः *for* निष्क्रमः.

*1770* °शास्त्रेपि *for* °शास्त्रेऽपि.

*1771* वणिय्यायां *for* वणिज्यायां; °नागवयोः *for* °नागरयोः.

*1773* इछंति *for* इच्छन्ति; संवेदं *for* संवेगं.

*1774* ब्रह्मचर्याद्यामा° *for* ब्रह्मचर्यादावा°; मथ *for* मठ; ईष्यते *for* इष्यते.

*1776* सुसीमः *for* सुषीमः.

*1777* पूरणोपि *for* पूरणोऽपि.

*1773* अनुपमावि *for* अनुपमापि.

*1774* सामर्थे *for* सामर्थ्ये. विक्रमागमयोः *for* विक्रमोद्यमयोः

*1781* प्लंगमः *for* प्लवंगमः.

अभ्यागमोऽभ्यागमनं युद्धमभ्यागमं विदुः ।
सार्वभौमोऽपि दिङ्नागे सर्वपृथ्वीधरेऽपि च ॥

यातयाममिदं ज्ञेयं जीर्णे भुक्तोज्झिते तथा । 1785
अभ्युपगमः स्वीकारे समीपागमनेऽपि च ॥

॥ मश्लोकः ॥

सोमः स्यादोषधौ चन्द्रे पितृदेवकुबेरयोः ।
वसुदेवप्रभेदे च सोमः कर्पूरमुच्यते ॥

कामं काम्ये निकामे च कामस्तु मदनेच्छयोः । 1790
यत्काममभ्यनुज्ञाने तदव्ययमुदाहृतम् ॥

रामा स्त्री जामदग्न्यश्च रामो रामौ सितासितौ ।
रामो दाशरथिश्चासौ पशुभेदे हलायुधे ॥

ग्रामः संवसथे ज्ञेयो वृन्दे शब्दादिपूर्वकः ।
ग्रामो गीतस्वरे चैव संपूर्वः संयुगः स्मृतः ॥ 1795

1784 सार्वाभौमोपि *for* सार्वभौमोऽपि; दिङ्नाग *for* दिङ्नागे; °धरेपि *for* °धरेऽपि.
1786 °गमनेपि *for* °गमनेऽपि.
1788 °कुवेरयोः *for* °कुबेरयोः.
1789 वर्त्म° *for* वसु°.
1790 काम्यं *for* कामं; °इछयोः *for* °इच्छयोः.
1791 यत्कामभ्यकथने *for* यत्काममभ्यनुज्ञाने; तदवयं *for* तदव्ययं.
1792 रामे *for* रामो.
1793 च्चाषौ *for* चासौ.
1794 संवसते ( *before corr.* ) *for* संवसथे; शन्दादि° *for* शब्दादि°.

**धर्मा**: पुण्ययमन्यायस्वभावाचारसो [ *70* ] मपाः ।
विदुश्चापे **धर्म**शब्दमहिंसोपमयोरपि ॥

**यमा**: स्युर्यमजध्वाङ्क्षकृतान्ता यमुना **यमी** ।
शरीरसाधनापेक्षं नित्यं यत्कर्म तद्**यमः** ॥

**श्यामा** रात्रौ शारिवायां **श्यामौ** च हरितासितौ ।
**श्यामा** प्रियङ्गुराख्याता **श्यामा** च कापि कामिनी ॥

**वामं** निर्भरसुन्दरद्रविणयोर्**वामं** प्रतीपार्थकं
**वामं** सव्यमुदाहृतं कविवरैर्**वामः** स्मृतः शंकरः ।
**वामः** कामः पशौ पयोधरवरे **वामा** स्मृता कामिनी
**वामी** स्याद्वडवा तथोष्ट्रकवधूर्**वामी** शिवा गर्दभी ॥

**पद्मो** दाशरथौ निधौ च गदितो व्यूहप्रभेदेऽप्यसौ
संख्यानागविशेषयोरपि तथा पद्मकाष्ठौषधौ ।

---

*1796* धर्म्मा *for* धर्माः; पूण्य° *for* पुण्य°; °स्ववाचार° *for* °स्वभावाचार°; °सोपमाः *for* °सोमपाः.

*1797* चार्ये *for* चापे; धर्म्मशब्दं *for* धर्मशब्दं.

*1798* स्युःर् *for* स्युर्; जमज° *for* यमज°.

*1799* शरिर° *for* शरीर°; कर्म्म *for* कर्म.

*1800* शारिवाय *for* शारिवायां; श्यामा *for* श्यामौ.

*1803* करिवरैः ( *before corr.* ) *for* कविवरैः.

*1804* कामः ( *before corr.* ) *for* वामः; कामयशा *for* कामः पशौ.

*1805* वामा *for* वामी; स्याद्धुतवा *for* स्याद्वडवा; तथोष्टुक° *for* तथोष्ट्रक°; गर्द्धभी *for* गर्दभी.

*1806* दासरथौ *for* दाशरथौ; °प्रभेदेपि *for* °प्रभेदेऽपि.

*1807* पद्मकष्टौषधौ *for* पद्मकाष्ठौषधौ.

**पद्मा**न्विद्धि गजास्यविन्दुनिकरान्पद्मं सरोजं स्मृतं
**पद्मा** ब्राह्मणयष्टिका हरिवधूः स्यात्पद्मधारिण्यपि ॥

**ललामं** स्याद्ध्वजे शृङ्गे पुण्ड्रवालधिलक्ष्मसु ।
भूषावाजिप्रभावेषु प्रधाने च प्रयुज्यते ॥

**मध्यमो** मध्यजे मध्ये नृपरागप्रभेदयोः ।
पाणेर्मध्याङ्गुलिर्दुष्टरजाः कन्या च **मध्यमा** ॥

॥ यपादः ॥

**द्युरह्नि** त्रिदिवेऽपि स्याज्**ज्या** स्यान्मौर्वी वसुंधरा ।
**द्यो**शब्दो गगने स्वर्गे **यः** सर्वनाम्नि **यो**ऽनिले ॥

**पूज्यौ** श्वशुरपूजार्हा**वर्यः** स्यात्स्वामिवैश्ययोः ।
**नयो** नीतौ द्यूतभेदे **मृत्युः** स्यान्मरणे यमे ॥

---

*1808* पद्मानिद्धिरदास्य° *for* पद्मान्विद्धिगजास्य°; °विन्दुनिकराः *for* °बिन्दुनिकरान्.

*1809* ब्रांह्मण° *for* ब्राह्मण°.

*1810* स्यात् *for* स्याद्; शृगे *for* शृङ्गे; पुड्ड° *for* पुण्ड्र°.

*1811* भूमा° *for* भूषा°.

*1812* मृगा° *for* नृप°.

*1813* मध्याकुनिः *for* मध्याङ्गुलिः; धृष्ट° *for* दुष्ट°; मध्यमाः *for* मध्यमा.

*1815* द्यूराह्नि *for* द्युरह्नि; त्रिविदेपि *for* त्रिदिवेऽपि.

*1816* °शव्दो *for* °शब्दो; सर्वनाम्निधोनिले *for* सर्वनाम्नि योऽनिले.

*1817* श्वसुर° *for* श्वशुर°; °पूजार्हार्यः (*before corr.*) *for* °पूजार्हावर्यः

**मय** उष्ट्रे दैत्यभेदे **मन्युर्**दैन्ये क्रतौ क्रुधि ।
**स्मयौ** गर्वाद्भुतौ ज्ञेयौ **गोप्यौ** संरक्ष्यचेटकौ ॥

**दस्युः** पाटच्चरद्विषोर्**मूल्यं** वेतनव [71]स्नयोः ।
**गुह्यं** रहस्युपस्थे च **सव्यं** दक्षिणवामयोः ॥

**पथ्यं** हितेऽभया **पथ्या** **वीक्ष्यं** विस्मयदृश्ययोः ।
**दैत्योऽ**सुरः सुरा **दैत्या** **गेयौ** गातव्यगायनौ ॥

**भृत्यो** दासे भृतिर्**भृत्या** **पुष्यः** कलियुगर्क्षयोः ।
**पद्यं** श्लोके सृतिः **पद्या** **लभ्यं** लब्धव्ययुक्तयोः ॥

**इभ्य** आढ्ये हस्तिनी**भ्या** **सस्यं** वृक्षफले गुणे ।
**अर्थ्यौ** विपश्चिते न्याये **अन्यावसदृ**शेतरौ ॥

~~~~~~~~~

1819 यम *for* मय.

1820 गरीश्रुतौ *for* गवाद्भुतौ.

1821 पोटच्चरावाद्योः *for* पाटच्चरद्विषोः ; मून्यं *for* मूल्यं; °वस्त्रयोः *for* °वस्नयोः.

1822 उपान्ते *for* उपस्थे.

1823 °हितेभया *for* हितेऽभया; वाह्यं *for* वीक्ष्यं.

1824 असुरोऽसुरा *for* असुरः सुरा.

1825 भृतीर् *for* भृतिर्.

1826 स्मृतिः *for* सृतिः; पाद्या *for* पद्या; लब्धव्य° *for* लब्धव्य°; °मुक्तयोः *for* °युक्तयोः.

1827 ईभ्य *for* इभ्य; हस्तिनीत्या *for* हस्तिनीभ्या; त्रिक्ष° *for* वृक्ष°.

1828 अन्यो *for* अर्थ्यौ.
~~~~~~~~~

**चोद्यं** चोदनाश्चर्ये **चान्त्यावन्तभवाधमौ** ।
**सेव्यमुशीरे** सेवार्हे **कुड्यं** भित्तौ विलेपने ॥

**धान्यं** व्रीहिषु धन्याके **प्रियं** हृद्ये धवे **प्रियः** ।
**शय्या** तल्पे ग्रन्थगुम्फे **व्रज्या** त्वटनरङ्गयोः ॥

**त्रयी** त्रये त्रिवेद्यां च **इज्या** यजनशुद्धयोः ।
**माया** स्याच्छाम्बरी बुद्धिर्विशल्येऽशल्यदन्तिके ॥

**पौलस्त्यो** रावणे श्रीदे **शाण्डिल्य** ऋषिविल्वयोः ।
**वालेयो** गर्दभे दैत्ये **पर्यायोऽवसरे** क्रमे ॥

**अपत्ये** दुहितृसुतौ **लौहित्यौ** व्रीहिसागरौ ।
**श्वशुर्यौ** देवरश्यालौ **विस्मयाऽद्भुतगर्वयोः** ॥

---

*1829* रोद्ये *for* चोद्ये; रोदन° *for* चोदन°; °आश्चर्य्ये *for* °आश्चर्ये; अन्तभय° *for* अन्तभव°.

*1830* उसीरे *for* उशीरे; सेव्यार्हे *for* सेवार्हे.

*1831* धने *for* धवे.

*1832* तल्प *for* तल्पे; °गुल्फे *for* °गुम्फे; °रंगयोः *for* °वर्गयोः.

*1833* वेद्याश्च ( *after corr.* ) *for* त्रिवेद्यां च; ईज्या *for* इज्या.

*1834* स्याछाम्वरी *for* स्याच्छाम्बरी; वुद्धिर् *for* बुद्धिर्; विशन्येशल्पि° *for* विशल्येऽशल्य°.

*1835* °विल्लयोः *for* °बिल्वयोः.

*1836* वाल्यो *for* बालेयो; गर्द्धभे *for* गर्दभे; पर्यायोवसरे *for* पर्यायोऽवसरे.

*1837* अपत्त्ये *for* अपत्ये.

*1838* श्वसुर्यो *for* श्वशुर्यौ; विस्मयोद्भुत° *for* विस्मयोऽद्भुत°.

आदित्यौ सुरमार्तण्डौ भ्रातृव्यौ भ्रातृजद्विषौ ।
व्यवायः सुरते शुद्धौ हृदयं चित्तवक्षसोः ॥

अवश्यायो हिमे गर्वे रौहिणेयो बुधे बले ।
वृषाकपायी श्रीगौर्योः समुदायो रणे गणे ॥

॥ यार्धश्लोकः ॥

कन्ये राश्यौषधीभेदौ कन्ये कुमारिकास्त्रियौ ।
रथ्यो रथस्य वोढा रथ्या रथौघविशिखयोः ॥

सौम्यः सोमसुते मुग्धेऽभास्वरे सोमदैवते ।
साध्यो योगे साधनीये साध्याः स्युर्दशदेवताः ॥

[72] वन्ध्यः स्यादफलो वृक्षो वन्ध्या चापल्यवर्जिता ।
सूर्योऽर्कस्तत्प्रिया सूर्या सूर्यां स्यात्काचिदोषधिः ॥

---

1839 ⁰मार्त्तंडौ *for* ⁰मार्तण्डौ; भ्रातृय⁰ *for* भ्रातृज⁰.

1840 चित्य⁰ *for* चित्त⁰; ⁰वक्षसौ *for* ⁰वक्षसोः.

1841 अवस्यायो *for* अवश्यायो; हिमि *for* हिमे; रौहिणोयो *for* रौहिणेयो; वुधे *for* बुधे; वले *for* बले.

1842 °कपाई *for* °कपायी; °गौर्य्योः *for* °गौर्योः.

1843 घार्द्धः *for* यार्धश्लोकः.

1844 कन्यौ *for* कन्ये; रस्यौषधी° ( *before corr.* ) *for* राश्यौषधी⁰.

1845 वोचा *for* वोढा; रथोघ⁰ *for* रथौघ⁰; ⁰विशाखयोः *for* ⁰विशिखयोः.

1846 मुग्धेभास्वरे *for* मुग्धेऽभास्वरे.

1848 वन्धाः *for* वन्ध्यः; अकलो *for* अफलो.

1849 सूर्य्यो *for* सूर्यो; अर्कस्तुप्रिया *for* अर्कस्तत्प्रिया; म्यात् *for* स्यात्; ओषधीः *for* ओषधिः.

कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने । 1850
लक्ष्यं छद्मनि विख्यातं लक्ष्यं संख्याविशेषके ॥

शल्यश्च शल्यके रागे शङ्कौ च मदनद्रुमे ।
मत्स्यो मीने विराटाख्ये देशेऽपि च जनान्तरे ॥

कायः शरीरे लक्षे च संघाते ब्रह्मदैवते ।
प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः ॥ 1855

क्षयौ निलयकल्पान्तौ क्षयोऽपचयरोगयोः ।
चयस्त्वाचयने वृन्दे प्राकारे मूलबन्धने ॥

रूप्यं प्रशस्तरूपं स्याद्रूप्यं रजतमिष्यते ।
भाग्यं शुभात्मकं दैवं केवलं च शुभाशुभम् ॥

सह्यं विख्यातमारोग्यं सह्यौ सोढव्यपर्वतौ । 1860
पाक्यं विदुर्यवक्षारे विटाख्यलवणेऽपि च ॥

---

*1850* प्रकोष्टे *for* प्रकोष्ठे; हर्मादेः *for* हर्म्यादेः; काश्चि *for* काञ्च्यां; °वद्धने *for* °बन्धने.

*1851* छन्दसि *for* छद्मनि; वीख्यातं *for* विख्यातं.

*1852* शंकोचे *for* शङ्कौ च.

*1853* मत्सो *for* मत्स्यो; देशेपि *for* देशेऽपि.

*1854* व्रह्म° *for* ब्रह्म°.

*1855* प्रयः *for* प्रायः; अलसने *for* अनशने; वाहुल्य° *for* बाहुल्य°.

*1856* क्षयोपचय° *for* क्षयोऽपचय°.

*1857* प्रकारमूलवंधने *for* प्राकारे मूलबन्धने.

*1858* स्याद्रुप्यं *for* स्याद्रूप्यं.

*1859* केवलञ्च *for* केवलं च.

*1860* सत्यं *for* सह्यं; विष्यात आरोग्यं *for* विख्यातमारोग्यं; सत्यौ *for* सह्यौ.

*1861* °लवणेपि *for* °लवणेऽपि.

**चित्यं** मृतकचैत्ये स्या**च्चित्या** मृतचितौ स्मृता ।
**मेध्यं** पूतं वचा **मेध्या मेध्या** स्यात्सूक्ष्मपुष्पिका ॥

**पेयं** पानीयमाख्यातं **पेया** प्रपा च कीर्तिता ।
**याम्या** तु भरणी ऋक्षं **याम्या** स्याद्दिक्च दक्षिणा ॥

**वन्यं** वनभवे **वन्या** जलारण्यसमूहयोः ।
**ग्राम्यं** स्त्रीकरणेऽश्लीले **ग्राम्यः** स्यात्प्राकृतो जनः ॥

**भव्यं** श्रेयसि योग्ये च **भव्यं** भाविनि सुन्दरे ।
**मध्यं** न्यायेऽवकाशे च लग्नके चावलग्नके ॥

**याप्यं** कुत्सितमिच्छन्ति **याप्यं** स्याद्यापनीयकम् ।
**संख्यं** युद्धे च **संख्या** स्यादेकत्वादिविचारयोः ॥

**पुण्यं** त्रितयमुद्दिष्टं श्रेयःसुकृतसुन्दरम् ।
**दूष्यं** पटकुटी प्रोक्ता **दूष्यं** दूषणमर्हति ॥

**वीर्यं शुक्रे** प्रभावे च बले तेजसि च स्मृतम् ।
**अर्घ्यं** तु स्याद्यदर्घार्थ**मर्घ्यो**ऽसौ योऽर्घमर्हति ॥

---

*1862* स्यात् चित्या *for* स्याच्चित्या.
*1864* कीर्त्तिता *for* कीर्तिता.
*1865* स्यादिक् *for* स्याद्दिक्.
*1866* जन॰ *for* जल॰.
*1867* भ्राम्यं *for* ग्राम्यं; ॰करणेश्लीले *for* ॰करणेऽश्लीले; ग्रामः *for* ग्राम्यः.
*1868* भवां *for second* भव्य.
*1869* न्यायेवकाशे *for* न्यायेऽवकाशे; अरलग्नके *for* अवलग्नके.
*1870* इछन्ति *for* इच्छन्ति; स्याद्वापनीयतं *for* स्याद्यापनीयकं.
*1872* उदिष्टं *for* उद्दिष्टं.

**माल्यं** सुमनसां माला **माल्यं** सुमनसोऽपि च ।
**धिष्ण्यं** स्थाने च ऋक्षे च **धिष्ण्योऽग्नौ धिष्ण्यमालये** ॥

**कश्यं** प्रतोदमश्वानां कशार्हं मध्यमात्रकम् ।
**आस्यं** वक्त्रान्तरे वक्त्रे **आस्या** च स्थितिरुच्यते ॥

**चैत्यमा**यतनं विद्याच्चैत्य**मु**द्देशपादपः । 1880
**मलयो** देश आरामे चन्दने पर्वतान्तरे ॥

**वलयः** कण्ठरोगे स्याद्वलयं कङ्कणं विदुः ।
**अनयो** विपदि दैवे व्यसने दुर्णयेऽपि च ॥

**प्रणयः** प्रेमणि ख्यातो याच्ञाविश्रम्भयोरपि ।
**अत्ययो**ऽतिक्रमे कृच्छ्रे दोषे च नाशदण्डयोः ॥ 1885

---

*1874* वीर्यः *for* वीर्यं; वले *for* बले.

*1875* अर्घं *for* अर्घ्यं; स्यादर्घार्थं *for* स्याद्यदर्घार्थं; अर्घ्योसौ *for* अर्घ्योऽसौ; जोर्घ्यं *for* योऽर्घं.

*1876* माला *for second* माल्यं; सुमनसोपि *for* सुमनसोऽपि.

*1877* धिष्टयं *for* धिष्ण्यं; धिष्टयौग्नौ *for* धिष्ण्योऽग्नौ; धिष्टयं *for* धिष्ण्यं.

*1879* ववक्त्रे *for* वक्त्रे.

*1880* चैत्यंतदेश° *for* चैत्यमुद्देश°.

*1881* नन्दने *for* चन्दने.

*1882* कंकनं *for* कङ्कणं.

*1883* मलयः ( *before corr.* ) *for* अनयः; दुर्णयेपि *for* दुर्णयेऽपि.

*1884* प्रेम विख्यातौ *for* प्रेमणि ख्यातो; °विश्रस्तयोः *for* °विश्रम्भयोः.

*1885* अत्ययोति° *for* अत्ययोऽति°; कृच्छे *for* कृच्छ्रे.

संनयः समवाये स्यात्पृष्ठस्थायिबलेऽपि च ।
आशयं विदुराधारं स्यादभिप्राय आशयः ॥

विजया तिथ्यन्तरं गौरी विजयौ तु जयार्जुनौ ।
अभये निर्भयोशीरे अभया च हरीतकी ॥

तपस्या तपसां चर्या तपस्यो मासि फाल्गुने ।
चक्षुष्या शुभगा प्रोक्ता चक्षुष्यमञ्जनादिकम् ॥

द्वितीया कथ्यते जाया पूरणी स्याच्च यद्द्वयोः ।
अभिख्या कीर्तिता कीर्तावभिख्या नामशोभयोः ॥

वदान्यो दानशीले स्याद्वदान्यो वर्णवागपि ।
पर्जन्यो मेघशब्दे स्यादिन्द्रे च ध्वनदम्बुदे ॥



1886 सन्नयः *for* संनयः; समयाये *for* समवाये; पृष्ठुस्थाईवनेपि *for* पृष्ठस्थायिबलेऽपि.

1887 अभिप्रा *for* अभिप्राय.

1888 विजया *for* विजयौ.

1889 अभयो *for* अभये.

1890 चर्यां *for* चर्या; तपःस्यान् *for* तपस्यो.

1892 स्याचयद्विषोः *for* स्याच यद्द्वयोः.

1893 अभिक्ष्या *for* अभिख्या; कीर्त्तिचा *for* कीर्तिता; कीर्त्तौ *for* कीर्तौ; अभीक्ष्यं *for* अभिख्या.

1894 वादान्यो *for* वदान्यो.

1895 पर्यन्यो *for* पर्जन्यो; ⁰शव्दे *for* ⁰शब्दे; इन्द्रिये *for* इन्द्रे; ⁰अंबुदे *for* ⁰अम्बुदे.

भुजिष्या प्रैष्यमात्रे स्याद्भुजिष्यश्चानधीनकः ।
प्रणाय्योऽसंमते ख्यातश्चाभिलाषविवर्जिते ॥

प्रकीर्यः पूतिकरजे विनिकीर्ये च की[ 74 ]र्तितः ।
अहार्यं ब्रुवते शैलं यच्च हर्तुं न शक्यते ॥

कुलायो नीडवद्दृष्टः स्थाने गेहे च पक्षिणाम् । 1900
ऊर्णायुरिष्यते मेष ऊर्णायुर्मेषकम्बलः ॥

संस्त्यायः संनिवेशे स्यात्संघाते च प्रकीर्तितः ।
उपायः सामभेदादावुपायः स्यादुपागतिः ॥

चाम्पेयश्चम्पके ख्यातश्चाम्पेयो नागकेशरे ।
कालेयो दैत्यभेदे स्यात्कालेयं कालखण्डकम् ॥ 1905

---

*1896* भुजिष्याः *for* भुजिष्यः.
*1897* प्रणाय्यो संमते *for* प्रणाय्योऽसंमते; ख्यातः च *for* ख्यातश्च; अभिनाश॰ *for* अभिलाष॰.
*1898* प्रकीर्य्यः *for* प्रकीर्यः; कीर्त्तितः *for* कीर्तितः.
*1899* आहार्यं *for* अहार्यं; ध्रुवके *for* ब्रुवते; हर्त्तुं *for* हर्तुं.
*1900* नीडमुदिष्टं *for* नीडवद्दृष्टः.
*1901* उर्णायुः *for* ऊर्णायुः; उर्णायुर्म्मेष॰ *for* ऊर्णायुर्मेष॰.
*1902* सन्निवेशो *for* संनिवेशो; प्रकीर्त्तितः *for* प्रकीर्तितः.
*1903* सामभेदौ *for* सामभेदादौ.
*1904* चम्पको *for* चम्पके.
*1905* ॰कंडकं *for* ॰खण्डकं.

आत्रेयो मुनिरात्रेयी सरिद्भेदो रजस्वला ।
शैलेयं तु सुगन्धि स्याच्छैलेयं तु शिलान्तरम् ॥

ऐणेयमेण्याश्चर्माद्यं स्त्रीरतबन्धभेदयोः ? ।
अश्वीयं हितमश्वस्य वृन्दमश्वस्य च स्मृतम ॥

इन्द्रियं तु हृषीके स्यादिन्द्रियं चेतसि स्मृतम् ।
सौकर्यं स्यादनायासः सौकर्यं सूकरक्रिया ॥

सौभाग्यं स्यात्सुभगता ग्रहयोगः स कीर्तितः ।
सौरभ्यमाहुः सौगन्ध्यं सौरभ्यं च मनोज्ञताम् ॥

ब्राह्मण्यं ब्राह्मणत्वे स्यात्समूहे च द्विजन्मनाम् ।
प्रसव्यं कविभिः प्रोक्तं प्रतिकूलानुकूलयोः ॥

हिरण्यं मानभेदे स्याद्धने हेमन्यकुप्यके ।
ब्रह्मण्यो ब्रह्मसाधुः स्याद्ब्रह्मण्यश्च शनैश्चरः ॥

---

*1906* सविदोदा *for* सरिद्भेदो.
*1907* शैलेयन्तु ( *both times* ) *for* शैलेयं तु; स्या *for* स्याच्.
*1908* चर्म्माद्यं *for* चर्माद्यं; स्त्रीरत्नवहुभेदयोः *for* स्त्रीरतबन्धभेदयोः.
*1909* अस्वस्य *for second* अश्वस्य.
*1910* ईन्द्रियस्तु *for* इन्द्रियं तु.
*1911* सौकार्यं *for second* सौकर्यं; सुकर° *for* सूकर°.
*1912* स्यात् शुभता *for* स्यात्सुभगता; प्रकीर्त्तितः *for* कीर्तितः.
*1913* सौरभ्यमंहुः *for* सौरभ्यमाहुः ; सौभाग्यं *for* सौरभ्यं.
*1914* व्रह्मण्यं *far* ब्राह्मण्यं; व्राह्मणत्वे *for* ब्राह्मणत्वे.
*1915* करभीः *for* कविभिः.
*1916* मणि° *for* मान°; हेमणि *for* हेमनि.
*1917* व्रह्मण्यः *for* ब्रह्मण्यः ; व्रह्म° *for* ब्रह्म° ; व्रह्मण्यः *for* ब्रह्मण्यः.

**नेपथ्यं** स्यादलंकारे रङ्गवाटयेऽपि च स्मृतम् ।
**अपसव्यं** प्रतिकूलमपसव्यं च दक्षिणम् ॥

**उपकार्या** नृपावासो या चोपकारमर्हति । 1920
**प्रवचनीयं** समाख्यातं प्रवाच्ये च प्रवक्तरि ।
**प्रत्युद्गमनीयमुपस्थेये** धौतांशुकद्वये ॥

॥ यश्लोकः ॥

**क्रिया** कृत्ये चिकित्सायां चेष्टायां कर्म [ *75* ] पूजयोः ।
उपायारम्भशिक्षासु निष्कृतौ संप्रधारणे ॥ 1925

**कृत्या** स्याद्देवताभेदे **कृत्यं** विद्विष्टकार्ययोः ।
क्रियायां च स्मृता कृत्या कृत्यास्तव्यानीयादयः ॥

**कुल्या** नदी **कुल्यमस्थि कुल्या** नीरप्रणालिका ।
कुलस्यापि हितः **कुल्यः कुल्यश्च** कुलसंभवः ॥

---

*1918* रंगवाह्येपि *for* रङ्गवाटयेऽपि.
*1919* अपसव्यच्च *for* अपसव्यं च.
*1920* तूपवासो *for* नृपावासो.
*1921* प्रवनीयं *for* प्रवचनीयं; प्रवाचि *for* प्रवाच्ये.
*1924* चिकीत्सायां *for* चिकित्सायां; कर्म्म° *for* कर्म°.
*1925* °आरस्म° *for* °आरम्भ°; °शिक्षांसु *for* °शिक्षासु; निक्वतौ *for* निष्कृतौ.
*1296* स्यादेवता° *for* स्याद्देवता°; विदिष्ट° *for* विद्विष्ट°.
*1927* क्रियायाञ्च *for* क्रियायां च; कृत्वा *for* कृत्या; तव्यामीयादयः *for* तव्यानीयादयः.
*1929* कुयः *for second* कुल्यः.

**जया** दुर्गा सखी चास्या जयन्ती च **जया** स्मृता ।
गणिकापि **जया** प्रोक्ता **जयस्तु** विजयः स्मृतः ॥

**जन्या** मातृवयस्या स्याज्जन्या च जननी प्रिया ।
जननीयजनित्रोश्च **जन्यं** निर्वादयुद्धयोः ॥

**गृह्या** शाखान्तरे प्रोक्ता **गृह्यम**स्वयपक्षयोः ।
**गृह्यान्**वदन्ति विद्वांसो गृहासक्तमृगाण्डजान् ॥

**दायो** दानं विनिर्दिष्टं यौतुकादिधनं तथा ।
विभक्तद्रव्यं पितृद्रव्यं **दायमाहु**र्मनीषिणः ॥

**तार्क्ष्यं** शैलाञ्जनं ज्ञेयं **तार्क्ष्यः** स्याद्गरुडाश्वयोः ।
**तार्क्ष्यो** रथेऽश्वकर्णाख्यवृक्षे च रविसारथौ ॥

**योग्यं** वदन्ति योगार्हं **योग्याम**भ्यसनं तथा ।
प्रवीणोपायिनौ **योग्यौ योग्यम**प्यौषधान्तरम् ॥

---

1930 जय *for second* जया.

1931 गणिका विजया *for* गणिकापि जया.

1932 मात्रि° *for* मातृ° ; स्याजन्या *for* स्याज्जन्या.

1933 जननीऽय° *for* जननीय° ; °मुद्धयोः *for* °युद्धयोः.

1934 गूह्या *for* गृह्या; साखान्तरे *for* शाखान्तरे; गूह्यं *for* गृह्यं.

1935 गृह्यान *for* गृह्यान् ; द्विवांसो *for* विद्वांसो; °शक्त° *for* °सक्त°.

1937 आहुम्मनीषिणः *for* आहुर्मनीषिणः.

1938 रथेश्व° *for* रथेऽश्व°; °कर्णाख्यवुद्धौ ( *before corr.* ) *for* °कर्णाख्यवृक्षे.

1940 योगं *for* योग्यं; अभ्यसनन्तथा *for* अभ्यसनं तथा.

1941 प्रवीणोपयिनौ *for* प्रवीणोपायिनौ; औषधन्तरं *for* औषधान्तरं.

ह्द्यं स्याद् ह्द्द्रवं ह्द्यं ह्द्दितं तत्प्रियं च यत् ।
वशीकरणमन्त्रोऽपि वैदिको मन्त्र इष्यते ॥

**गव्यं** ज्या गोहितं **गव्यं गव्या** गोनिकुरुम्बकम् ।
रागद्रव्यं च गव्याख्यं **गव्यं** क्षीरादिकं गवाम् ॥ 1945

**द्रव्यं** स्याद्भेषजे भव्ये **द्रव्यं** द्रविणमुच्यते ।
... ... ... .... .... ... ॥

**सत्यं** युगे च लोके स तपोलोकात्परस्तु यः ।
**सत्या** स्यात्सत्यभामायां **सत्यं** शपथतथ्ययोः ॥

**कल्यं** प्रभातं सज्जं च [ 76 ] **कल्यो** नीरोगदक्षयोः । 1950
कल्याणी वाक्च **कल्या** स्यात्**कल्या** कादम्बरी मता ॥

**वाच्यं वक्तव्यमित्येते** वर्तेते प्रतिपादने ।
वाचार्हे कुत्सिते हीने दूषणे चापि कीर्त्यते ॥

1942 कृत्यं *for* ह्द्यं; स्यादुद्भवं *for* स्याद् ह्द्द्रवं; कृत्यं *for second* ह्द्यं; कृदितं *for* ह्द्दितं; तत् प्रियञ्च *for* तत्प्रियं च.

1943 ⁰मंत्रोपि *for* ⁰मन्त्रोऽपि; मत्य *for* मन्त्र; ईष्यते *for* इष्यते.

1944 त्यागोहितं ( *before corr.* ), त्यागे हितं (*after corr.*) *for* ज्या गोहितं; ⁰निकुरुंवकं *for* ⁰निकुरुम्बकं;

1945 गवां द्रव्यं *for* रागद्रव्यं.

1946 भाव्ये *for* भव्ये.

1947 *The text is corrupt. It reads as* वलाद्ये विस्मृतद्रव्ये विद्यायन्ते जनेपि च.

1949 सपथ⁰ *for* शपथ⁰.

1950 सह्यश्च *for* सज्जं च.

1951 कल्य *for second* कल्या; कंदुर्दुरी *for* कादम्बरी.

1952 वर्त्तेते *for* वर्तेते.

1953 वाचाहे *for* वाचार्हे; दूषने; *for* दूषणे; कीर्त्त्यते *for* कीर्त्यते.

**मङ्गल्यं** मङ्गले साधौ **मङ्गल्यश्च** मसूरकः ।
**मङ्गल्या** च वचा रुद्रा मल्लिगन्धागुरुस्तथा ॥

**गाङ्गेयं** कनकं प्रोक्तं **गाङ्गेयं** च कशेरुकम् ।
**गाङ्गेयं** मुस्तकं प्राहुर्**गाङ्गेयो** भीष्म उच्यते ॥

**क्षेत्रियोऽ**साध्यरोगः स्यात्**क्षेत्रियः** पारदारिकः ।
अन्यदेहचिकित्सार्हे **क्षेत्रियं** क्षेत्रजे तृणे ॥

**विषयो** यस्य यो ज्ञातः स तस्य कविभिः स्मृतः ।
इन्द्रियार्थे जनपदे **विषयो** गोचरेऽपि च ॥

**निकायश्च** निवासे स्यात्सङ्घे चैकानुसेविनी ।
असंहतपदार्थानामेकत्रकरणेऽपि च ॥

---

1954 मरूरकः *for* मसूरकः.

1955 सल्लिगन्धा ( *before corr.* ) *for* मल्लिगन्धा; मल्लिगन्धेति पाठः ( *in marg.* )

1956 गांगेयञ्च *for* गाङ्गेयं च.

1957 प्राहु *for* प्राहुर् ; भिष्मः *for* भीष्मः.

1958 क्षत्रियोः साध्य° *for* क्षेत्रियोऽसाध्य°; क्षत्रियः *for* क्षेत्रियः; पावकायिकः *for* पारदारिकः.

1959 °चिकीत्सार्हे *for* °चिकित्सार्हे; *for* क्षत्रियां *for* क्षेत्रियं.

1960 कविभीः *for* कविभिः.

1961 ईन्द्रियार्थे *for* इन्द्रियार्थे; गोचरेपि *for* गोचरेऽपि.

1962 स्या *for* स्यात् ; एकानुशेविनी *for* एकानुसेविनी.

1963 °करणेपि *for* °करणेऽपि.

कषायो रुधिरे विष्टे रसभेदे सुगन्धिके ।
क्वाथे द्रव्येऽङ्गरागे च श्योनाके चेति सप्तसु ॥

प्रत्ययश्च प्रतीते स्यात्प्रकृतेश्च परस्तथा ।
ज्ञाने च शपथे छिद्रे विश्वासाधीनहेतुषु ॥

समयः शपथः कालः सिद्धान्ताचारयोरपि ।
संगते च क्रियाकारे समयो वारणी मता ॥

पौरुषेयपदं विद्यात्पुंसो वधविकारयोः ।
पुरुषेण कृते कार्ये पुरुषाणां कदम्बके ॥

॥ इति यान्तवर्गः ॥

॥ रपादः ॥

रशब्दः पावके तीक्ष्णे रैशब्दः कनके धने ।
धूश्चिन्ता धूश्च भारोऽग्रे चाश्विशेकदेशयोः ? ॥

नरः स्यादर्जुने मर्त्ये भरो निर्भरभारयोः ।
ताम्रं शुल्बे वर्णभेदे चरुर्हव्यार्थभाण्डयोः ॥

---

*1964* कयायो *for* कषायो.
*1967* सपथे *for* शपथे; छन्दे *for* छिद्रे.
*1968* सपथः *for* शपथः.
*1969* संगिते *for* संगते; वालनी *for* वारणी.
*1971* कदंवके *for* कदम्बके.
*1972* यान्तः समासः *for* इति यान्तवर्गः.
*1974* रशब्दः *for* रशब्दः; रैशब्दः *for* रैशब्दः.
*1975* भावोग्रे *for* भारोऽग्रे.
*1976* भारो *for* भरो.
*1977* श्वर्णे *for* शुल्बे.

मरू पर्वतधन्वानौ **शारौ** शबलमारु[77]तौ ।
**खरः** स्याद्गर्दभे तीक्ष्णे **चौरश्चो**रसुगन्धयोः ॥

**अद्रयो** द्रुमशैलार्का **गृध्रो**ऽतिलुब्धपक्षिणोः ।
**शक्रं** स्यात्कुटजे नस्त्री **व्यग्रो** व्यासक्त आकुलः ॥

**स्वरु**र्यूपार्धके वज्रे **स्वैरः** स्वच्छन्दमन्दयोः ।
**मित्रो** रविः सुहृन्मित्रं **राष्ट्रमु**त्पातदेशयोः ॥

दारु काष्ठे देवदारौ **कारुः** शिल्पिनि कारके ।
**क्षरं** जलं **क्षरो** मेघो **द्वारं** तु द्वारि चागतौ ॥

**उस्रो** रश्मिस्तु गौ**रुस्रा** **तन्द्री** निद्राप्रमीलयोः ।
**सुरो** देवे **सुरा** मद्ये **वध्रं** त्रिपुवरत्रयोः ॥

**आर्द्रा** ऋक्षे क्लिन्न**मार्द्रमस्त्रमा**युधलोहयोः ।
**अभ्रं** व्योम...**शुभ्रं** शुक्रप्रदीप्तयोः ॥



*1978* मरुः *for* मरू; शरल° *for* शबल°.
*1979* खरो गर्द्धभतीक्ष्णायां *for* खरः स्याद्गर्दभे तीक्ष्णे.
*1980* मुत्रयोर् *for* अद्रयो; गृध्रौतिलुब्ध° *for* गृध्रौऽतिलुब्ध°.
*1981* स्या *for* स्यात्; कुटजोरस्त्री *for* कुटजे नस्त्री; व्याशक्त *for* व्यासक्त.
*1982* श्वरर्जुपार्द्धके *for* स्वरुयूपार्धके; स्वछन्द° *for* स्वच्छन्द°.
*1983* उत्पत्ति° *for* उत्पात°.
*1984* देवदारु *for* देवदारौ; *Add* कारुः *after* देवदारौ.
*1985* द्वारन्तु *for* द्वारं तु.
*1986* **उष्ट्रो** ( *before coor.* ) *for* उस्रो. रश्मिषु *for* रश्मिस्तु; उष्ट्रा ( *before corr.* ) *for* उस्रा.
*1987* **दरे** *for* देवे; वक्रं *for* वध्रं; त्रिपुररुद्रयोः *for* त्रिपुवरत्रयोः.
*1988* **आर्द्रं** अस्त्रं *for* आर्द्रमस्त्रं.
*1989* **व्योमारुलाकेषु** *for* व्योम...

शास्त्रं ग्रन्थे निदेशे च शस्त्रमायुधलोहयोः ॥ 1990
क्षीरं दुग्धे च नीरे च भूरि प्राज्यसुवर्णयोः ॥

कृच्छ्रं दुःखं प्रायश्चित्तं स्मरः स्थाणुः स्मरो गतिः ।
ऐन्द्रिः काके जयन्ते च पुरुर्भूरिपरागयोः ॥

क्षिप्रः स्वेदो नदी क्षिप्रा इरा भूवाक्सुराप्सु च ।
हिंस्रा काकादनी चापि व्याघ्री निदिग्धिकापि च ॥ 1995

प्रस्तरौ मणिपाषाणौ संस्तरौ प्रस्तराध्वरौ ।
अण्डीरौ शक्तपुरुषौ प्रवीरौ सुभटोत्तमौ ॥

विस्तारौ विततस्तम्बौ तुषारौ हिमशीकरौ ।
भास्करौ वह्निमार्तण्डौ विकारौ रोगवैकृतौ ॥

पिठरौ दन्तिकाग्रन्थौ जठरौ कठिनोदरौ । 2000
प्रकारौ भेदसादृश्यौ आकाराविङ्गिताकृती ॥

---

*1990* ग्रंथ *for* ग्रन्थे; निवेसे *for* निदेशे; शास्त्रं *for* शस्त्रं.
*1991* क्षीरे *for* क्षीरं; भूरिः *for* भूरि.
*1992* कृछ्रं *for* कृच्छ्रं.
*1993* ऐन्द्रः *for* ऐन्द्रिः.
*1994* ईरा *for* इरा.
*1996* सस्तरौ *for* संस्तरौ; श्रस्तर° *for* प्रस्तर°.
*1997* कुंडीरौ *for* अण्डीरौ; स्वभट° *for* सुभट°.
*1998* °स्तन्नौ *for* °स्तम्बौ.
*1999* °मार्त्तंडौ *for* °मार्तण्डौ

**प्रसरः** प्रणये वेगे **द्वापरः** संशये युगे ।
**भ्रमरः** कामुके भृङ्गे **इतरः** पामरान्ययोः ॥

**मन्दरो** बहले मन्दे **चाङ्गारोऽ**लातभौमयोः ।
**कर्बुरः** कनके शट्यां **कुबेरः** श्री [ *74* ] दमन्दयोः ॥

**कूर्परौ** जानुकफणी **तित्तिरौ** मुनिपक्षिणौ ।
**जम्बीरौ** जन्तुपर्णासौ **महेन्द्रा**विन्द्रपर्वतौ ॥

**वासरो** नागभेदेऽपि **चागुरुः** शिंशपापि च ।
**भद्रश्री**श्चन्दनेऽपि स्यादा**सुरी** राजिकापि च ॥

**सुन्दरी** वृक्षभेदेऽपि **मञ्जरी** तिलकेऽपि च ।
**पवित्रं** स्यात्कुशे पूते **कलत्रं** श्रोणिभार्ययोः ॥

**भ्रामरं** मधुनि ग्राव्णि **मन्दिरं** नगरे गृहे ।
**तिमिरं** ध्वान्ताक्षिरुजोरुद्धार उद्धृतावृणे ॥

~~~~~~~~~

*2002* रोगे *for* वेगे.

*2003* ईतरः *for* इतरः.

*2004* मंथरो *for* मन्दरो; वहने *for* वहले; अंगीरोलाभ° ( *before carr.* ) *for* अङ्गारोऽलात°.

*2005* कर्वुरः *for* कर्बुरः; कुवेरः *for* कुबेरः.

*2006* कर्परौ *for* कूर्परौ; °कफनी *for* °कफणी; ग्राणि° *for* मुनि°.

*2007* जंविरौ ( *before corr.* ) जंवीरौ ( *after corr.* ) *for* जम्बीरौ.

*2008* °भेदेपि *for* °भेदेऽपि; शिंसपा *for* शिंशपा.

*2009* भद्रःश्री *for* भद्रश्रीः; चन्दनेपि *for* चन्दनेऽपि.

*2010* °भेदेपि *for* °भेदेऽपि; तिलकेपि *for* तिलकेऽपि.

*2011* कुक्षे *for* कुशे.

*2012* भामरं *for* भ्रामरं; मधुलि *for* मधुनि; ग्राव्धि *for* ग्राव्णि.

*2013* °रूजोः *for* °रुजोः.
~~~~~~~~~

प्रवरं संततौ श्रेष्ठे चाक्षरं ब्रह्मवर्णयोः ॥
प्रतीहारो द्वारि द्वाःस्थे संप्रहारः सृते हतौ ॥

अवस्करौ गुह्यगूथौ अपस्करं रथाङ्गकम् ।
सहचरः सखा झिन्टी दण्डधारो यमे नृपे ।
मधुकरौ कामिभृङ्गौ विभाकरोऽग्निसूर्ययोः ॥

॥ रार्धश्लोकः ॥

अरमङ्गे रथाङ्गस्य शीघ्रं स्याच्छीघ्रगोऽप्यरम् ।
करो राजप्रदो यः स्याद्रश्मौ हस्ते घनोपले ॥

परोऽभ्यासे रिपौ श्रेष्ठे दूरेऽथ केवले परम् ।
धरा भूमिर्धराः शैलाः कर्पासतूलको धरः ॥

तरिः स्यान्नावि भाण्डे च दीपादिस्थितिहेतुके ।
स्थिरा भूः सालपर्णी च स्थिरौ कठिननिश्चलौ ॥

---

2014 अमरं *for* अक्षरं; व्रह्म° *for* ब्रह्म°.

2015 प्रतिहार (*before corr.*) *for* प्रतीहारः; दास्थे *for* द्वाःस्थे; संप्रहारो *for* संप्रहारः; श्रृधे *for* सृते.

2016 अपस्करौ *for* अवस्करौ; °ग्रथौ *for* °गूथौ; परस्करं *for* अपस्करं.

2017 झिल्टी *for* झिन्टी.

2018 °भृगौ *for* °भृङ्गौ; विभाकरोग्नि° *for* विभाकरोऽग्नि°.

2019 रार्द्धः *for* रार्धश्लोकः.

2020 स्यात् शीघ्रगोपि *for* स्याच्छीघ्रगोऽपि.

2021 स्यात् *for* स्याद्.

2022 परोभ्यासे *for* परोऽभ्यासे; दूरोऽद्ध *for* दूरेऽथ; परे *for* परं.

2024 नामि *for* नावि.

चरो द्यूतप्रभेदे स्याच्चरश्चारश्चरः क्रिया ।
गरं विषे गरो व्याधौ गरा गिरणमुच्यते ॥

क्षुरश्छेदनवस्तु स्यात्कोकिलाक्षे च गोक्षुरे ।
खुरोऽप्यङ्घ्रिर्गवादीनां खट्वादीनां च पादुका ॥

वारि स्याद्वालके तोये वारिस्तु गजबन्धिनी ।
कारा बन्धे तदागारे कारो निश्चयहिंसयोः ॥

भारः स्वर्णपलानां तु द्विसहस्रे च वीवधे ।
[ 79 ] सारो मज्जिन बले व्याधौ सारं न्याय्ये जले धने ॥

चारः पियालवृक्षे स्याच्चारोऽपसर्पबन्धयोः ।
क्षारः स्याल्लवणद्रव्ये चूर्णादौ काचभस्मनोः ॥

मारौ मरणकन्दर्पौ मारी चण्ड्यां जनक्षये ।
भीरुः स्त्री कातरो भीरुर्भीरुश्चापि ? शतावरी ॥

~~~~~~~~~~

2026 द्यूतप्रभे *for* द्यूतप्रभेदे; चालः *for* चारः.
2028 °वस्तू *for* °वस्तु.
2029 क्षुरोपि *for* खुरोऽपि.
2030 °गंधिनी *for* °बन्धिनी.
2031 करा *for* कारा; वधे *for* बन्धे; निश्चल° *for* निश्चय°.
2032 °पलानान्तु *for* °पलानां तु; धीवरे *for* वीवधे.
2033 मज्जि *for* मज्जिन; वने *for* बले; सार *for* सारं; न्माद्ये *for* न्याय्ये.
2034 चरोपसंसर्प° *for* चारोऽपसर्प°; °वंधयोः *for* °बन्धयोः.
2035 पूर्णादौ *for* चूर्णादौ; °भस्मणोः *for* °भस्मनोः.
2036 मारि ( *before corr.* ) *for* मारी.
2037 भीरुश्च स्त्री क भीरू *for* भीरुः स्त्री कातरो भीरुर् ; भीरुः *for* भीरुश्चापि.
~~~~~~~~~~

पारी घण्टा तथा पारं पर्यन्ते च परे तटे ।
गौरोऽरुणे सिते पीते गौरी कन्या शिवापि च ॥

पौराः पुरभवा लोकाः पौरं कत्तृणमुच्यते ।
कीरा जनपदाः केऽपि कीराः शुकाख्यपक्षिणः ॥

चीरं च व्रतिनां वस्त्रं चीरमापीडरेखयोः ।
क्रूरं भयंकरं ज्ञेयं क्रूरौ कठिननिर्दयौ ॥

चन्द्रो हेम्नि च कर्पूरे चन्द्रः सोमे तथा विधौ ।
गुन्द्रः शरे तु गुन्द्रा तु प्रियङ्गौ मुस्तकेऽपि च ॥

इन्द्रः शक्रे च योगे च कुटजादित्यरात्रिषु ।
वक्रः शनैश्चरो ज्ञेयो वक्रमनृजुदुष्टयोः ॥

ओड्रा जनपदाः केचिदोड्रं च कुसुमान्तरम् ।
कद्रुर्माता तु नागानां कद्रुः कनकपिङ्गले ॥

रौद्रो यमे आतपे च रौद्रं नाट्ये रसान्तरम् ।
क्षेत्रं वपुषि केदारे सिद्धस्थानकलत्रयोः ॥

---

*2038* घन्टा *for* घण्टा.
*2039* असिते *for* सिते.
*2040* प्लव⁰ *for* पुर⁰; कतृणं *for* कत्तृणं.
*2041* केपि *for* केऽपि.
*2042* आपीन⁰ *for* आपीड⁰; ⁰वेखयोः *for* ⁰लेखयोः.
*2043* क्रुरं *for* क्रूरं; °निर्दयो *for*° निर्दयौ.
*2045* मुस्तकेपि *for* मुस्तकेऽपि.
*2046* ईन्द्रः *for* इन्द्रः.
*2048* केचित् ओड्रश्च *for* केचिदोड्रं च.
*2049* कद्रुर्म्माता *for* कद्रुर्माता.

**पोत्रं** मुखाग्रमुद्दिष्टं सूकरस्य च हलस्य च ।
**सत्रं** यज्ञे सदादाने छादनारण्ययोरपि ॥

**पत्रं** स्याद्वाहने पर्णे पक्षे च शरपक्षिणोः ।
**चैत्रं** मृतकचैत्यं स्याच्चैत्रो मासान्तरेऽपि च ॥

**वक्त्रं** मुखे काव्यसन्धिभेदेऽनुष्टुभि च स्मृतम् ।
**यात्रा** तु यापनोपाये गतौ देवार्चनोत्सवे ॥

**छत्रा** मधुरिका **छत्रं** धन्याके चातपत्रके ।
**वृत्राः** पर्वतमेघेन्द्रा **वृत्रा** ध्वान्तारिदानवाः ॥

[ *80* ] **मन्त्रो**ऽतिगुप्तवादे स्याद्वेददेवविशेषयोः ।
**धात्री** मातोपमाता च वसुधामलकी स्मृता ॥

**वज्रं** स्यात्कुलिशे हीरे ग्रहयोगे च काञ्जिके ।
**उग्रः** शूद्रासुतः क्षत्रादुग्रावुत्कर्षमानिनौ ॥

---

*2052* उदिष्टं *for* उद्दिष्टं.
*2054* सर॰ *for* शर॰.
*2055* सूतक॰ *for* मृतक॰; मासान्तरेपि *for* मासान्तरेऽपि.
*2056* वक्रं *for* वक्त्रं.
*2057* जापनो॰ *for* यापनो॰.
*2058* छत्रो *for* छत्रा.
*2059* छत्रा *for* वृत्राः; ॰मेघोच्छ्राः *for* ॰मेघेन्द्राः; छत्राः *for second* वृत्राः.
*2060* मन्त्रोति॰ *for* मन्त्रोऽति॰; वेदविशेषवेदयोः *for* वेददेवविशेषयोः.
*2061* मात्रोप॰ *for* मातोप॰.
*2063* क्षत्तात् दुग्रौ *for* क्षत्रादुग्रौ.

उष्ट्रः पशुविशेषः स्यादुष्ट्रो वाह्यरथेऽपि यः ।
बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ ॥

वप्रः पितरि केदारे वप्रः प्राकाररोधसोः ।
अमरौ देवास्थिसंहारावमरे दूर्वागुडूचिके ॥

निकरो निवहे सारे कपर्दानां विनिचये ।
सुषिरं विवरे वाद्ये संबन्धे सुषिरा नदी ॥

रुधिरः स्यान्महीपुत्रे रुधिरं कुङ्कुमासृजोः ।
मकरो जलचरे राशौ निधिभेदे च कीर्तितः ॥

शिशिरं शीतलं विद्यात्सुषीमऋतुभेदयोः ।
विवरच्छिद्ररन्ध्रादीनाहुर्दूषणगर्तयोः ॥

प्रदरो योषितां रोगः प्रदरः शरभङ्गयोः ।
अधरावोष्ठहीनौ तु अनूर्ध्वमधरं विदुः ॥

---

*2064* ⁰रथेपि *for* ⁰रथेऽपि.

*2065* वभ्रुर्म्मुन्यन्तरे *for* बभ्रुर्मुन्यन्तरे; वभ्रू *for* बभ्रू.

*2067* दुर्वा° *for* दूर्वा°.

*2068* सावे *for* सारे; विनिश्चये *for* विनिचये.

*2069* सुखिरं *for* सुषिरं; संवंधे *for* संबन्धे.

*2070* कुंकुमाश्रयोः *for* कुङ्कुमासृजोः.

*2071* कीर्त्तितः *for* कीर्तितः.

*2072* विद्यात् ऋषमे° *for* विद्यात्सुषीम⁰.

*2073* विवरं⁰ *for* विवर⁰; ⁰रंध्रादिन्यस्त⁰ *for* °रन्ध्रादीनाहुर्; ⁰गयोः *for* °गर्तयोः.

*2075* अनूर्धं *for* अनूर्ध्वं.

चिकुरो द्रुमभेदे स्याच्चिकुरौ केशचञ्चलौ ।
प्रखरोऽश्वादिसंनाहे प्रखरः स्याद्भृशं खरः ॥

खपुरं क्रमुकं प्राहुर्लसकं चोर्ध्वसंप्लवम् ।
विदुरो ज्ञानयुक्ते स्यान्मन्त्री दुर्योधनस्य च ॥

अपरं तु परार्थं स्यात्पश्चाद्गात्रे च दन्तिनाम् ।
कदरः क्षुद्ररोगे स्यात्कदरः खदिरे सिते ॥

चमरं चामरे प्रोक्तं चमर्यौ मञ्जरीमृगौ ।
वासिरं सामुद्रलवणं वसिरः करिपिप्पली ॥

कवरी वर्वरी शाकं कवरी साधुकुन्तलः ।
खदिरी शाकभेदे स्यात्खादिरो दन्तधावनः ॥

[ 81 ] ईश्वरो विभवे चार्थप्रभौ संभाविते नरे ।
विष्टरः कुशमुष्टौ स्यात्पीठपादप्रभेदयोः ॥

माठरो विप्रभेदे स्याद्व्यासे भास्करपार्श्वगे ।
कुञ्जरो द्विरदे केशे कुञ्जरी धातकी मता ॥

~~~~~~~~~~

2077 स्याद्रथं *for* स्याद्भृशं.
2078 व्रसकं *for* लसकं; चोर्द्ध॰ *for* चोर्ध्व॰
2079 दुर्य्योधनस्य *for* दुर्योधनस्य.
2080 पश्चादात्रे *for* पश्चाद्गात्रे.
2081 खदरे *for* खदिरे.
2084 साकं *for* शाकं.
2085 शाख॰ *for* शाक॰.
2087 स्या *for* स्यात्; ॰पादप्र॰ *for* ॰पादप॰.
~~~~~~~~~~

शाङ्करोऽनुडुहि ज्ञेय उक्तं छन्दसि शाङ्करम् । 2090
बन्धुरं सुन्दरे नम्रे बन्धुरं स्याच्चोन्नतानतम् ॥

तूवरौ नृपृगौ कालेऽजातश्मश्रुशृङ्गकौ ।
अम्बरं वाससि व्योम्नि कर्पासेऽथ सुगन्धिके ॥

गह्वरं विवरे दम्भे गह्वरं विजनं ? विदुः ।
जर्जरं तु विशीर्णे स्याज्जर्जरो वासवध्वजः ॥ 2095

घर्घरः पेचके प्रोक्तश्चलद्वारि नदान्तरे ।
झर्झरः स्यात्कलियुगे वाद्यभाण्डे च झर्झरः ॥

षड्ङ्वरः कठिने वास इङ्गिपर्णी च मार्जरी ? ।
कर्बूरं हेम्नि किर्मीरे कर्बूरस्तु निशाचरः ॥

अध्वरः सावधाने स्याद्वसुभेदे क्रतौ स्मृतः । 2100
आकरौ श्रेष्ठनिकरावुत्पत्तिस्थानमाकरः ॥

---

2090 शंकरः *for* शाङ्करः.

2091 बंधुरं (*both times*) *for* बन्धुरं; नाम *for* नम्रे.

2092 °स्मश्रु° *for* °श्मश्रु°.

2093 अंवरं *for* अम्बरं; कर्पासेथ *for* कर्पासेऽथ.

2094 गन्हर *for* गह्वरं; गत्वरं *for* गह्वरं; विवरं *for* विजनं.

2095 जर्जरन्तु *for* जर्जरं तु; वानर° *for* वासव°.

2099 *Drop* कचरं; हेन्मि कर्वूरे किर्मिरे *for* कर्बूरं हेम्नि किर्मीरे; कर्वूरः *for* कर्बूरः.

2101 आकरः *for* आकरौ.

दर्दुरो वाद्यभाण्डे स्यान्मण्डुके पर्वतान्तरे ।
गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च ॥

कुक्कुरं ग्रन्थिपर्णे स्यात्कुक्कुरः श्वा च कीर्तितः ।
दन्तुरं विषमं विद्याद्दन्तुरं चोर्ध्वदन्तके ? ॥

अङ्कुरः स्यात्पटीकाल ? अङ्कुरोऽभिनवोद्भिदि ।
चर्चरः कुटिले प्रोक्तो गीतिभदे च चर्चरी ॥

गर्गरं मत्स्यभेदे स्याद्गर्गरी दधिमन्थनी ।
पिञ्जरं हरिताले च पीतेऽप्यश्वान्तरेऽपि च ॥

उर्वरा सर्वसस्या स्यादुर्वरा भूमिमात्रकम् ।
शर्करा कर्परांशेऽपि सितारोगविशेषयोः ॥

मन्दुरा वाजि [ 82 ]शालायां शयनार्थे च वस्तुनि ।
वर्वरा कुसुमे शाके वर्वराः प्राकृता जनाः ॥

---

*2102* दर्दरो *for* दर्दुरो.

*2103* कैवर्त्ती⁰ *for* कैवर्ती⁰; मुस्तकेपि *for* मुस्तकेऽपि.

*2104* कुकुरं *for* कुक्कुरं; कीर्त्तितः *for* कीर्तितः.

*2105* विद्यात् *for* विद्याद्; दन्तुराध्वार्द्ध दन्तुरं *for* दन्तुरं चोर्ध्वदन्तके.

*2106* स्या *for* स्यात्; अंकुरोमिनवो⁰ *for* अङ्कुरोऽभिनवो⁰; °द्भिदिः *for* °द्भिदि.

*2108* ⁰भेद *for* ⁰भेदे; स्यात् *for* स्याद्.

*2109* पीतेपि *for* पीतेऽपि; अश्वान्तरेपि *for* अश्वान्तरेऽपि.

*2110* ⁰सश्या *for* ⁰सस्या.

*2111* शर्परांशेपि *for* कर्परांशेऽपि.

*2112* मंधुरा *for* मन्दुरा.

*2113* वर्वरा *for* वर्वराः; प्रकृते *for* प्राकृता.

शर्वरी तु हरिद्रा स्याच्छर्वरी वनिता निशा ।
शर्करी लेखनी ज्ञेया शर्करी छन्दसो भिदि ॥

मर्मरा दारु हरिद्रा वस्त्रभेदे च मर्मरः ।
एकाग्रमेकतानाख्यमैकाग्र्यं स्यादनाकुलम् ॥

खण्डाभ्रं स्यादभ्रलेशे कामिनीदशनक्षतौ ।
सावित्रः कथितो रुद्रः सावित्री देवतान्तरम् ॥

जलेन्द्रो जम्भलो ज्ञेयो जलेन्द्रो वरुणः स्मृतः ।
नरेन्द्रो भूपतिः ख्यातो नरेन्द्रश्चाहितुण्डिकः ॥

सामुद्रं तु समुद्रीयलवणादौ तु लक्षणे ।
किशोरं तरुणावस्थः किशोरो हयशावकः ॥

किंशारुः सस्यशूकं स्यात्किंशारुर्विशिखो मतः ।
उदारो दातृमहतोरुदारं दक्षिणं विदुः ॥

---

2114 शर्वरा *for* शर्वरी; हरिद्राः *for* हरिद्रा; स्यात् शर्वरी *for* स्याच्छ-र्वरी; निशाः *for* निशा.

2115 लेषनी *for* लेखनी.

2116 शर्म्मरा ( *before corr.* ) *for* मर्मरा; शर्मरः ( *before corr.* ) *for* मर्मरः

2117 °तालाख्यं *for* °तानाख्यं; अमाकुली ( *before corr.* ), अना-कुली ( *after corr.* ) *for* अनाकुलं.

2120 जंभनः *for* जम्भलः .

2121 °तुंडिकाः *for* °तुण्डिकः .

2122 सामुद्रन्तु *for* सामुद्रं तु.

2123 °सावकः *for* °शावकः .

2124 किंशारूः *for* किंशारुः; किंशारु *for* किंशारुर् ; विशिखौ *for* विशिखो.

2125 उदिरं *for* उदारं; दक्षिणो *for* दक्षिणं.

भृङ्गारः कनकालुः स्याद्भृङ्गारी झिल्लिका मता ।
गान्धारोऽपि च सिन्दूरो ग्रामरागविशेषयोः ॥

आधारश्चाधिकरणे कूप्यामप्यालवालके ।
विदारो दारणे खन्तौ विदारी चौषधौ गदे ॥

निकारः स्यात्परिभवे धान्यस्योत्किरणेऽपि च ।
पिण्डारो महिषीपाले पिण्डारश्च द्रुमान्तरे ॥

आहारो भोजने हारे तथैवाहरणेऽपि च ।
आसारः स्यात्प्रसरणे वेगाद्वर्षे सुहृद्बले ॥

विहारो भ्रमणं क्रीडा विहारः सुगतालयः ।
संस्कारोऽनुभवाज्जातः संकल्पप्रतियत्नयोः ॥

कान्तारः कानने इ[ 83 ]क्षौ कान्तारो दुर्गवर्त्मनि ।
मन्दारः सुरवृक्षे स्यात्पारिभद्रार्कपर्णयोः ॥

---

*2126* स्यात् *for* स्याद्.
*2127* गान्धारोपि *for* गान्धारोऽपि; द्रुम॰ *for* ग्राम॰.
*2128* कुप्यां *for* कूप्यां.
*2129* विदारो दारुणे खन्तौ *repeated*; दारुणे *for* दारणे.
*2130* धान्ये स्यात् किरणेपि *for* धान्यस्योत्किरणेऽपि.
*2132* भावे *for* हारे; आहरणेपि *for* आहरणेऽपि.
*2133* सुहृद्धने *for* सुहृद्बले.
*2134* स्वगतालयः *for* सुगतालयः.
*2135* संस्कारोन्नभवात् *for* संस्कारोऽनुभवात्.
*2136* ईक्षौ *for* इक्षौ; वर्त्मदुर्गमे *for* दुर्गवर्त्मनि.
*2137* स्या *for* स्यात्.

केदारः क्षेत्रकोष्ठीषु ? केदारौ शिवपर्वतौ ।
खर्जुरं रूप्यके विद्याद्वृश्चिकद्रुमभेदयोः ॥

माल्लूरं पिचु बिल्वं च क्रीडाबद्धे तथा गुणैः ।
मसूरः स्यादपामार्गः खराश्वायां च केकिनि ॥

मसूरश्च मसूरी च व्रीहौ पापरुजि क्रमात् ।
करीरस्तरुभेदः स्यात्कलशे वैणवाङ्कुरे ॥

काश्मीरं पौष्करं मूलं काश्मीरं कुङ्कुमादिकम् ।
सौवीरं काञ्चिके देशे उद्योते चाञ्जनाशुणि ? ॥

अवीरा निष्पतिसुता चावीराः सत्त्ववर्जिताः ।
औशीरं चामरे दण्डे चौशीरं शयनासने ॥

किर्मीरः कर्बुरो ज्ञेयः किर्मीरो राक्षसान्तरम् ।
अभिमरो वधे युद्धे सहायसाध्वसेऽपि च ॥

---

2140 मानूरं *for* माल्लूरं; °विल्वं *for* °बिल्वं; °वद्धे *for* °बद्धे.

2141 खराश्वायाश्च *for* खराश्वायां च; केकिनी *for* केकिनि.

2143 कलसे *for* कलशे; वैनवा° *for* वैणवा°.

2144 कुंकुमादिकं *for* कुङ्कुमादिकं.

2145 उद्योत्त *for* उद्योते.

2146 सत्व° *for* सत्त्व°.

2147 शयनाशने *for* शयनासने.

2148 किर्म्मीरः ( *both times* ) *for* किर्मीरः ; कर्वुरो *for* कर्बुरो.

2149 अभिमारो *for* अभिमरो; बले *for* वधे; सहाये साधनेपि *for* सहायसाध्वसेऽपि.

व्यतिकरो दुःखहेतौ व्यसनव्यतिषङ्गयोः ।
दशपुरं वदन्त्यार्या मुस्तपत्तनभेद्योः ॥

आडम्बरः समारम्भे गजगर्जिततूर्ययोः ।
दुरोदरं पणे द्यूते द्यूतकारो दुरोदरः ॥

अरुष्करः स्याद्व्रणकृद्भल्लातकमरुष्करम् ।
अश्वतरो नागराजे गोपुत्रे चापि गर्दभे ॥

द्वैमातुरौ समाख्यातौ जरासंधविनायकौ ।
प्रतिसरः प्रदेशे स्याद्वार्ताहारसहाययोः ॥

चराचरं जगदिदं गगने गतिमत्यपि ।
अनुत्तरः स्थिरेऽनूर्ध्वे श्रेष्ठेऽवाच्योऽप्यनुत्तरः ॥

पयोधरः कोषकारे स्त्रीस्तने वारिदेऽपि च ।
दिगम्बराः सामाख्याता नग्नक्षपणशंकराः ॥

---

2151 °प्रस्तर° *for* °पत्तन°

2152 आडंबरः *for* आडम्बरः.

2153 द्यूतकारी *for* द्यूतकारो.

2154 अवस्करः (*before corr.*) *for* अरुष्करः; अरुस्करं *for* अरुष्करं.

2155 गर्द्भे *for* गर्दभे.

2157 प्रतिसारः *for* प्रतिसरः; प्रवेसे *for* प्रदेशे; वार्त्ता° *for* वार्ता°.

2158 गगणे *for* गगने; गतमत्यपि *for* गतिमत्यपि.

2159 अनुर्द्ध *for* अनूर्ध्वे; श्रेष्ठावाचो *for* श्रेष्ठेऽवाच्यो.

2160 वारिदेपि *for* वारिदेऽपि.

2161 दिगंबरा *for* दिगम्बराः; श्रयः° *for* समा°; लग्न° *for* नग्न°; °क्षयण° *for* °क्षपण°.

**औडुम्बरः** श्राद्धदेवे गदभेदे च [ *84* ] कीर्तितः ।
**नीलाम्बरौ** समाख्यातौ रौहिणेयशनैश्चरौ ॥

**कालञ्जरो** देशभेदे चण्डी **कालञ्जरा** स्मृता ।
**इन्दीवरं** कुवलयम**िन्दीवरी** शतावरी ॥ *2165*

**निषद्वरस्तु** जम्बालो निशा **निषद्वरी** मता ।
**निशाचराः** समाख्याता भूतराक्षसपेचकाः ॥

**पारावारः** समुद्रे स्यात्**पारावारं** तटद्वयम् ।
**शिशुमारो** जलोद्भूतजन्तौ तारामयाच्युते ॥

**परिवारः** परिजने खड्गकोषेऽपि जङ्गमे । *2170*
**अभिहारो**ऽभियोगे च चौर्ये च खड्गकोषके ॥

**अकूपारः** समुद्रः स्यादकूपारश्च कूर्मराट् ।
**अवहारो** जनपदो वाटेऽवहरणेऽपि च ॥

---

*2162* औडंवरः *for* औडुम्बरः; कीत्तितः *for* कीर्तितः .
*2163* नीलंवरौ *for* नीलाम्बरौ.
*2165* ईन्दीवरं *for* इन्दीवरं.
*2166* निसद्वरः *for* निषद्वरः; जंवालः *for* जम्बालः; निसद्वरी *for* निषद्वरी.
*2167* निशाचाराः *for* निशाचराः .
*2169* जनोद्भूत° *for* जलोद्भूत°.
*2172* कुर्म्मराट् *for* कूर्मराट्.
*2173* अवहरणेपि *for* अवहरणेऽपि.

सूत्रधारः शिल्पिभेदे पात्रे वै नाटकस्य च ।
घनसारस्तु कर्पूरे वृक्षभेदे जलेऽपि च ॥

रथकारस्तु माहिष्यात्करणीजे च तक्षणि ।
अलंकारो विभूषायां ग्रन्थभेदे च कीर्तितः ॥

॥ रश्लोकः ॥

श्रीशब्दः कविभिः प्रोक्तो लक्ष्मीसंपत्तिकान्तिपु ।
अधिकारे सरस्वत्यां शोभाकीर्तिप्रभासु च ॥

भद्रं मुस्तकसाधुनोः सुतसुखश्रेष्ठेषु भद्रा पुन–
र्गम्भारीजघनेफलासुरसरिद्रास्नार्धचन्द्रासु च ।
भद्रो मेरुकदम्बके च वृषभे भद्रस्तथा खञ्जने
भद्रः कुञ्जरजातिभेदकरणे भद्रं स्मृतं मङ्गलम् ॥

तन्त्रं कारणशास्त्रयोश्च शपथे भैषज्यसिद्धान्तयो–
र्मुख्यार्थेऽपि परिच्छदेऽपि च तथा तन्त्रं कुटुम्बात्मनि ।

~~~~~~~~

2175 जनेपि *for* जलेऽपि.
2176 करणीये *for* करणीजे.
2177 कीर्त्तितः *for* कीर्तितः.
2179 श्रीशव्दः *for* श्रीशब्दः; प्रोक्ता *for* प्रोक्तो.
2180 °कीर्त्ति° *for* °कीर्ति°.
2181 °तुधुनोः *for* °साधुनोः; °श्रेष्टेषु *for* °श्रेष्ठेषु; पुनःर् *for* पुनर्.
2182 °राश्रार्द्ध° *for* °रास्नार्ध°.
2183 °कदंवके *for* °कदम्बके.
2185 तत्रं *for* तन्त्रं; भैषय्य° *for* भैषज्य°.
2186 मुख्यार्थेपि *for* मुख्यार्थेऽपि; परिछदेपि *for* परिच्छदेऽपि; तत्रं *for* तन्त्रं; कुटुंवात्मनि *for* कुटुम्बात्मनि.
~~~~~~~~

तन्त्रं शाकटसूत्रछन्दसुभयार्थप्रयोजकस्तु सः
तन्त्रीः स्यात्तु विपञ्चिकादिकगुणे स्याद्देह[ 85 ]नाडीषु च ॥

चित्रा मूषिकपर्णिका निगदिता चित्रा सुभद्रा स्मृता
गोडुम्बापि च दन्तिकापि च तथा सर्पप्रभेदेऽपि सा। 2190
हस्तालम्भनतारका निगदिता चित्रा तथा शाम्बरी
चित्रं कर्बुरमद्भुतं तु तिलकं चालेख्यमुत्कीर्तितम् ॥

गोत्रा विश्वंभरा ज्ञेया गोत्रा गोनिकुरुम्बकम् ।
नाम गोत्रं कुलं गोत्रं गोत्रश्च धरणीधरः ॥

शुक्रो दैत्यगुरुः प्रोक्तः शुक्रौ मासहुताशनौ। 2195
शुक्रं देहवतां बीजं शुक्रमक्षिरुजं विदुः ॥

क्षुद्रः स्यादधमे क्रूरे क्षुद्रोऽपि कृपणस्तथा ।
क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ॥

---

*2187* तत्रं *for* तन्त्रं.

*2188* तन्त्री *for* तन्त्रीः; स्यातूरिपञ्चिका° *for* स्यात्तु विपञ्चिका°; स्यादेहनाडिषु *for* स्याद्देहनाडीषु.

*2189* मुषिक° *for* मूषिक°.

*2190* गोडुंबा *for* गोडुम्बा; कुन्तिका *for* दन्तिका; °प्रभेदेपि *for* °प्रभेदेऽपि.

*2191* शांवरी *for* शाम्बरी.

*2192* कर्वुरं *for* कर्बुरं; अद्भूतं *for* भद्भुतं; उत्कीर्त्तितं *for* उत्कीर्तितं.

*2193* गोनिकुरुंवकं *for* गोनिकुरुम्बकं.

*2194* मात्रं *for* गोत्रं; गोत्रञ्च *for* गोत्रश्च.

*2196* वीजं *for* बीजं.

*2198* शरघा *for* सरघा.

**चक्रस्तु** चक्रवाके स्याच्चक्रं सैन्यरथाङ्गयोः ।
राष्ट्रे दम्भप्रभेदे च **चक्रं** प्रहरणान्तरम् ॥

**मात्रा** कर्णविभूषायां धने माने परिच्छदे ।
अक्षरावयवे चाल्पे **मात्रं** कार्त्स्न्येऽवधारणे ॥

**पात्रं** स्याद्भाजने योग्ये **पात्रं** कुलद्वयान्तरे ।
संधिविग्रहकादौ च श्रुवादौ **पात्रमिष्यते** ॥

**गात्राणि** विदुरङ्गानि **गात्रमुक्तं** कलेवरे ।
अग्रजङ्घाविभागे च गजानां **गात्रमिष्यते** ॥

**अग्रं** पलानां परिमाणमुक्तं
प्रान्तेऽवलम्बेऽप्यधिकेऽपि **चाग्रम्** ।
**अग्रं** पुनः पर्वणि **चाग्रमाहुः**
पूर्वे प्रधाने प्रथमे गणे च ॥

**नेत्रं** वस्त्रप्रभेदः स्यात्तरुमूले च लोचने ।
**नेत्रं** मथिगुणे नद्यां **नेत्रं** नयननाडिका ॥

---

2200 दन्त° *for* दम्भ°.
2201 परिछदे *for* परिच्छदे.
2202 कार्त्स्न्येवधारणे *for* कार्त्स्न्येऽवधारणे.
2205 गात्रानि *for* गात्राणि.
2206 गजनां *for* गजानां.
2207 °युक्तं *for* °मुक्तं.
2208 प्रान्तेवलंवेप्यधिकेपि *for* प्रान्तेऽवलम्बेऽप्यधिकेऽपि.
2211 स्यात् तरुमूले *for* स्यात्तरुमूले.
2212 नाड्यां *for* नद्यां.

पुण्ड्र श्वित्रप्रभेदः स्यात्पुण्ड्राञ्जनपदान्विदुः ।
पुण्ड्र इक्षुप्रभेदे च पुण्ड्रोऽतिमुक्तपादपः ॥

पुरं शरीरमित्याहुर्गृहोपरिगृहं पुरम् । 2215
पुरो गुग्गुलुराख्यातो नगरे तु पुरं पुरी ॥

दरो भये च ग[ 86 ]र्ते च आङ्पूर्वो गौरवे स्मृतः ।
दरी तु कन्दरे प्रोक्ता किञ्चिदर्थे दराऽव्ययम् ॥

गिरी गीर्ण्यक्षिरोगौ च गिरिः प्लक्षमहीध्रयोः ।
गिरिर्गैरीयकः क्रीडागुडाकापि च कीर्तितः ॥ 2220

गुरुर्महति विख्यातो दुर्जरालघुनोर्गुरुः ।
गुरुर्निषेकादिकरे पित्रादिसुरमन्त्रिणोः ॥

हरिर्वातांशु चन्द्रार्कशुकभेकयमाहिषु ।
विष्ण्वन्द्रकपिसिंहेषु पिङ्गपिष्टप्रभेदयोः ॥

---

*2213* पुंड्रा *for* पुड्रान्; जनपदे *for* जनपदान्.
*2214* ईक्षु° *for* इक्षु°; पुंड्रोतिमुक्तपावकः *for* पुण्ड्रोऽतिमुक्तपादपः.
*2215* गुहोपरि° *for* गृहोपरि°.
*2217* दारा *for* दरो; गर्त्ते *for* गर्ते; आङ° *for* आङ्°.
*2218* गौरवे *for* कंदरे; किश्चिदर्थे *for* किञ्चिदर्थे.
*2219* गिरि *for* गिरिः.
*2220* गैरियकः *for* गैरीयकः; *add* च ( *after corr.*) *after* °गुडाकापि; कीर्त्तितः *for* कीर्तितः.
*2221* दुर्जरोलघुनो *for* दुर्जरालघुनोर्.
*2222* गुरिः *for* गुरुः.
*2223* °शुभ° *for* °शुक°; °यमाह्विषु *for* °यमाहिषु.
*2224* लिंग° *for* पिङ्ग°.

**वरः** श्रेष्ठे जामातरि परिवृतौ साधु च **वरं**
**वरो**ऽभीष्टे देवासुरमभिहितं कुङ्कुममपि ।
**वरी**मिन्दीवर्यामभिदधति षिङ्गेऽपि च **वरं**
मनागिष्टे यत्स्या**द्वरम**थ च तच्चाव्ययमपि ॥

द्यूतोपलक्षणं **शारिः शारिः** शकुनिकान्तरम् ।
हस्तिपर्याणकं **शारिः शारिः** कपट इष्यते ॥

**वार**स्त्ववसरे वृन्दे द्वारे सूर्यादिवासरे ।
सुराश्रयणकं **वारो वारी** घटीभबन्धनी ॥

**धीरो** धैर्यवति ख्यातो **धीरौ** मन्थरपर्वतौ ।
**धीरं** कुङ्कुममाख्यातं **धीरो** दक्ष उदाहृतः ॥

**तारो**ऽत्युच्चध्वनितरणयोः कीशमुक्ताविशुद्धयो–
**स्तारो** रूप्ये स्फुरितकिरणे निर्मले **तारमा**हुः ।
**तारा** ऋक्षे नयनकनिका बुद्धदेव्यां च **तारा**
**तारा** प्रोक्ता धिषणवनिता चापि सुग्रीवपत्नी ॥

---

2225 श्रेष्टे *for* श्रेष्ठे.

2226 वरोभिष्टे *for* वरोऽभीष्टे; अविहितं *for* अभिहितं.

2227 इन्दीनर्य्यो *for* इन्दीवर्यां; शिडयोपि *for* षिङ्गेऽपि.

2228 तच्चव्ययं *for* तच्चाव्ययं.

2229 शारिर्द्युतोपलक्षणं *for* द्यूतोपलक्षणं शारिः.

2230 *Add* शारिः *after first* शारिः; ईष्यते *for* इष्यते.

2232 सुराश्रजनकं *for* सुराश्रयणकं; घट्टीभवंधनी *for* घटीभबन्धनी.

2233 धीर्यरवि *for* धैर्यवति.

2235 तारोत्युच्च° *for* तारोऽत्युच्च°.

2236 निर्म्मले *for* निर्मले.

2237 बुद्ध° *for* बुद्ध°.

**धारा** खड्गादिनिशितमुखे संततौ चापि **धारा**
वर्धन्यादेर्विवरपदके सैन्यभागेऽग्रिमे च ।
**धारास्ताः** स्युस्तुरगगतयः पञ्चधा रेचिताद्या
**धार**। ग्रावान्तरमपि तथाश्रान्तमासारवर्षम् ? ॥

**अपरं** स्यादपाचीनं पश्चाद्गात्रं च दन्तिनाम् ।
**अपरमि**दानीमर्थे जरायुश्चा**परा** स्मृता ॥

**मधुरो** रसभेदे स्यान्म [ *87* ] **धुरे** स्वादुशोभने ।
**मधुरा** मधुपूश्च स्याच्छतपुष्पा तथा मिसी ॥

**प्रकरश्चोपकारश्च** विकीर्णकुसुमादिषु ।
संहतौ चोपकृत्यां च यथासंख्यमवस्थितौ ॥

**शिखरं** किञ्चिदुद्वस्त्रेऽप्यग्रे पर्वतवृक्षयोः ।
पक्कदाडिमबीजाभमाणिक्यशकलेऽपि च ॥

---

*2240* वर्द्धन्यादेः *for* वर्धन्यादेः; °भागेग्रिमे *for* °भागेऽग्रिमे.
*2241* ता *for* ताः.
*2242* °मवि तथाश्राम° *for* °मपि तथाश्रान्त°.
*2243* अवाचीनं *for* अपाचीनं; °गात्रश्च *for* °गात्रं च.
*2244* °मन्य *for* °मर्थे; स्मृताः *for* स्मृता.
*2245* मधुरो *for* मधुरे; श्वादु° *for* स्वादु°.
*2246* मधुपुः *for* मधुपूः.
*2247* प्रकारः *for* प्रकरः.
*2248* चापकृहृत्याञ्च *for* चोपकृत्यां च.
*2249* शिषरं *for* शिखरं; उद्वस्त्रेव्यग्रे *for* उद्वस्त्रेऽप्यग्रे; °मुख्ययोः *for* °वृक्षयोः.
*2250* °वीजाभ° *for* °बीजाभ°; °सकलेपि *for* °शकलेऽपि.

**बदरी** कोलिकर्पास्योर्**बदरं** तु फलं तयोः ।
**बदरा** विष्णुक्रान्ता स्यादेलापर्ण्यां च कीर्तिता ॥

**केशरो** बकुले सिंहच्छटायां शम्पपक्षिणि ।
नागकेशरपुंनागौ **केशरौ** परिकीर्तितौ ॥

**नागरो** नगरोत्पन्नो विदग्धश्चापि **नागरः** ।
**नागरं** मुस्तके शुण्ठ्यां रतबन्धे च **नागरम्** ॥

**मत्सरः** कृपणे कोपे मक्षिकापि च **मत्सरा** ।
असोढा परसंपत्तेर्मात्सर्यमपि **मत्सरः** ॥

**संगरः** स्यात्क्रियाकारे विपत्तावपि **संगरः** ।
**संगरः** संयुगे चापि **संगरं** च शमीफलम् ॥

**शम्बरः** संयुगे वृद्धे मृगदैत्यप्रभेदयोः ।
श्रेष्ठे शिवारथौषध्यां **शम्बरी शम्बरं** जलम ॥

---

*2251* वदरी *for* बदरी; वदरन्तु *for* बदरं तु; फलन्तयोः *for* फलं तयोः.

*2252* वदरा *for* बदरा; एलापर्ण्याञ्च *for* एलापर्ण्यां च; कीर्त्तिता *for* कीर्तिता.

*2253* वकुले *for* बकुले; सिहछटायां *for* सिंहच्छटायां; °पक्षिणी *for* °पक्षिणि.

*2254* °केश° *for* °केशर°; °कीर्त्तितौ *for* °कीर्तितौ.

*2255* चपि *for* चापि.

*2256* शुंष्यां *for* शुण्ठ्यां; रतवंधे *for* रतबन्धे.

*2257* मत्सरः ( *sceond time* ) *for* मत्सरा.

*2258* आशाचा परसंपर्ते *for* असोढा परसंपत्तेर्; मात्सर्य्ये *for* मात्सर्यं.

*2260* समी° *for* शमी°.

*2261* शवरः *for* शम्बरः.

*2262* श्रेष्टे *for* श्रेष्ठे; शंवरी *for* शम्बरी; शंवरं *for* शम्बरं.

अन्तरं स्थानतादर्थ्यछिद्रान्तर्धिविनात्मसु ।
भेदावसरबाह्येषु मध्यात्मीयात्रधिष्वपि ॥

उत्तरं वाग्विशेषार्थश्रेष्ठोदीच्येषु कीर्तितम् ।
उत्तरा दिग्विराटाख्यनृपस्यौरस उत्तरः ॥

वल्लरं निर्जलस्थाने वनक्षेत्रे च वल्लरम् ।
वल्लरं गहने कुञ्जे मञ्जर्यां वल्लरी स्मृता ॥

पुष्कराणि विदुरोषधीतीर्थ—
द्वीपनागविहगोरगभेदान् ।
पद्मवारिगगनानि च भेरी
खड्गकाण्डमिभमुण्डमुखं च ॥

तमिस्रं तिमिरे प्रोक्तं तमिस्रं कोपवाचकम् ।
तमिस्रा तामसी [ *88*]रात्री तमिस्रा च तमस्ततिः ॥

---

*2263* °छिद्रान्तर्द्धि° *for* °छिद्रान्तर्धि°.
*2264* °वाह्येषु *for* °बाह्येषु.
*2265* °श्रोष्ठो° *for* °श्रेष्ठो°; कीर्त्तितं *for* कीर्तितं.
*2266* विराटाख्ययाम्स्वौरस *for* विराटाख्यानृपस्यौरस.
*2267* निर्जन° *for* निर्जल°; विन्दुक्षरे *for* वनक्षेत्रे.
*2269* पुष्पराणि *for* पुष्कराणि.
*2271* °गगणानि *for* °गगनानि.
*2272* इत° *for* इभ°; °मुख्यं *for* °मुखं.
*2273* तमिश्रंन्तिमिरे *for* तमिस्रं तिमिरे; तमिश्रं ( *second time* ) *for* तमिस्रं.
*2274* तमिश्रा *for* तमिस्रा; तमीश्रा *for* तमिस्रा.

**सैरन्ध्री** परवेश्मस्था स्ववशा शिल्पकारिका ।
वर्णसंकरजा या च **सैरन्ध्री** द्रौपदी स्मृता ॥

**कुमारः** सेनानीर्वरुणतरुरश्वपतिचरः
**कुमारौ** स्यातां हि शिखण्डकभूमीश्वरसुतौ ।
**कुमारी** कन्यायामपि मधुकर्यामपि मता
**कुमारी** द्वीपेऽस्मिन्नपि नवमाल्यामपि च सा ॥

**सिन्दूरं** रक्तचूर्णं स्याद्राजलेखितदक्षिणे ।
**सिन्दूरो** वृक्षभेदेऽपि **सिन्दूरी** रक्तचेलिका ॥

**परंपरः** प्रपौत्रेऽपि मृगभेदे **परंपरः** ।
**परंपरा** च संताने परिपाटी **परंपरा** ॥

**उडुम्बरो** वृक्षजातौ देहली **स्यादुडुम्बरः** ।
**उडुम्बरः** कुष्ठभेदे स्मृतं ताम्र**मुडुम्बरम्** ॥

**अवहारः** समाख्यातो द्यूतयुद्धादिविश्रमे ।
निमन्त्रणोपनेतव्यद्रव्ये ग्राहाख्ययादसि ॥

---

*2275* सैरध्री *for* सैरन्ध्री; °वेस्मस्था *for* °वेश्मस्था; शुभेशा *for* स्ववशा,
*2276* वर्णाशंकरजा *for* वर्णसंकरजा; ताया *for* या च.
*2278* स्यातां मि हि *for* स्यातां हि; °भूमिश्वर° *for* °भूमीश्वर°.
*2280* नरमान्यां *for* नवमाल्यां.
*2281* °लेखितदक्षिते *for* °लेखितदक्षिणे.
*2282* वृक्षभेदेपि *for* वृक्षभेदेऽपि.
*2283* प्रपौत्रेपि *for* प्रपौत्रेऽपि; परस्परः *for* परंपरः.
*2285* औडुंवरः *for* उडुम्बरः ; उडुंवरः *for* उडुम्बरः .
*2286* उडुंवरः *for* उडुम्बरः ; कुष्ट° *for* कुष्ठ°; उडुंवरं *for* उडुम्बरं.
*2287* °जिह्वादि° *for* °युद्धादि°; °वीत्ररे *for* °विश्रमे.
*2288* ग्रहाक्ष° *for* ग्राहाख्य°.

**परिकरं** विदुः प्रज्ञाः पर्यङ्कपरिवारयोः ।
प्रगाढगात्रिकाबन्धे समूहारम्भयोरपि ॥

**प्रतिसरं** समाख्यातं हस्तकङ्कणसूत्रके ।
आरक्षे मण्डने माल्ये चमूपृष्ठनियोज्ययोः ॥

**उत्पलपत्रमि**त्येतत्त**मालपत्रमेव** च ।
नखरे खण्डतिलकप्रभेदेऽपि च तद्दले ? ॥

**सर्वतोभद्र** इत्येष गृहश्लोकविशेषयोः ।
निम्बेऽपि **सर्वतोभद्रा** गम्भारी च प्रकीर्तिता ॥

॥ इति रान्तवर्गः ॥

॥ लपादः ॥

**शुक्लौ** योगावदातौ स्तः **स्थूलौ** निष्प्रज्ञपीवरौ ।
**भल्लौ** भाल्लुकबाणौ स्त **ओल्ल** आर्द्रे च सूरणे ॥

---

2289 प्रज्ञा *for* प्रज्ञाः.

2290 °पत्रिकावंधे *for* °गात्रिकाबन्धे.

2291 °कंकन° *for* °कङ्कण°.

2292 आराक्ष *for* आरक्षे; मंडले *for* मण्डने; ऽमात्ये *for* माल्ये; चक्षुप्रतिष्ठ° *for* चमूपृष्ठ°.

2294 नखरः *for* नखरे; °तिलके प्रभेदेपि *for* °तिलकप्रभेदेऽपि; तद्गणे *for* तद्दले.

2295 ईति *for* इति; गूह° *for* गृह°.

2296 नित्येपि *for* निम्बेऽपि; प्रकीर्तित *for* प्रकीर्तिता.

2297 रान्ताः समाप्ताः *for* इति रान्तवर्गः.

2298 लपादोदा *for* लपादः.

2299 स्तूलौ *for* स्थूलौ; निषंग° *for* निष्प्रज्ञ°; पिवरौ (*before corr.*) *for* पीवरौ.

2300 °वाणौ *for* °बाणौ; तुल्लः *for* ओल्लः; आद्रे *for* आर्द्रे; पूरणे *for* सूरणे.

शीलं स्वभावं सद्वृत्तं चालः स्यात्कम्पनं छदिः ।
चलः कम्पश्चला लक्ष्मीश्चेलं गर्हितत्र [ 89 ] स्त्रयोः ॥

दलं खण्डे दलं पर्णे डुलिः स्यात्कमठी मुनौ ।
छलं स्यात्स्खलितं छद्म पलं संमानमांसयोः ॥

लीला विलासक्रिययोर्हेलावज्ञाविलासयोः ।
आलिः सेतुः सखी पङ्क्तिः पल्ली ग्रामकुटी तथा ॥

धूली संख्यान्तरे पांसौ दोला यानं च सीविका ।
आभीलं भीषणे कृच्छ्रे कीलालमसृगम्बुनोः ॥

पेशलं चतुरे चारौ पुद्गलो वपुरात्मनोः ।
कल्लोलौ रिपूल्लोलौ सरलौ वृद्धपापकौ ॥

---

2301 शीतं *for* शीलं; स्वभाव *for* स्वभावं; सवृत्तं *for* सद्वृत्तं; कंपन *for* कम्पनं; छविः ( *before corr.* ) *for* छदिः.

2302 कंपा *for* कम्पश्च्.

2303 हलिः *for* डुलिः ; कमची *for* कमठी; घनौ *for* मुनौ.

2304 स्याछलितं *for* स्यात्स्खलितं; पद्म *for* छद्म; पलसम्मान° *for* पलं संमान°.

2305 हेलारंगा° *for* हेलावज्ञा°.

2306 पंडितः *for* पङ्क्तिः ; पल्लि *for* पल्ली.

2307 धूलीः *for* धूली ; पासो *for* पांसौ; यानञ्च *for* यानं च.

2308 कृछ्रे *for* कृच्छ्रे; अशृग्° *for* असृग्° °अंबुलोः *for* °अम्बुनोः.

2309 मुकुलः *for* पुद्गलः.

2310 विपु° *for* रिपु°.

**कोमलं** मृदुले तोये **निस्तलं** वर्तुले चले ।
**उज्ज्वलौ** दीप्तशृङ्गारौ **तमालौ** खड्गपादपौ ॥

**जम्बुलौ** केतकीजम्बू **जम्बालौ** पङ्कशैवलौ ।
**जटिला** पिप्पलीमांस्योः **पिच्छिलौ** विजिलझावुकौ ॥

**शैवलं** पद्मकाष्ठे च **कमलं** चातकेऽपि च । 2315
**अञ्जलिः** कुडवेऽपि स्याच्छद्मालुर्दोहदिन्यपि ॥

**कुद्दालो** युगपत्रेऽपि **लाङ्गुलं** मेहनेऽपि च ।
**विडालो** नेत्रपिण्डेऽपि **चूडाला** चोच्चटापि च ॥

**बहुफलस्तु** वृक्षेऽपि **गोलाङ्गुलः** कपावपि ।
**पोटगलाः** स्मृताः काशा **बृहन्नलौ** नलार्जुनौ ॥ 2320

---

*2311* मृदुणि *for* मृदुले; हर्वणे *for* वर्तुले.

*2312* उज्ज्वालौ *for* उज्ज्वलौ.

*2313* जंवुलौ ( *before corr.* ) *for* जम्बुलौ; °जवौ *for* °जम्बू ; जंवालौ *for* जम्बालौ.

*2314* पिप्पला° *for* पिप्पली°; °मांस्यो *for* °मांस्योः ; पिछिलौ *for* पिच्छिलौ; विजिन° *for* विजिल°.

*2315* °काष्टे *for* °काष्ठे; चातकेपि *for* चातकेऽपि.

*2316* अंजलं *for* अञ्जलिं; कुडयेपि *for* कुडवेऽपि; स्याछुद्मात्म *for* स्याच्छ्द्मालुर् ; दोछ्रन्यपि *for* दोहदिन्यपि.

*2317* °पत्रेपि *for* °पत्रेऽपि; लंगुलं *for* लाङ्गुलं; हेमलेपि *for* मेहनेऽपि.

*2318* °पिंडेपि *for* °पिण्डेऽपि; चुडलो *for* चूडाला.

*2319* वल्लुफलः *for* बहुफलः ; वृक्षेपि *for* वृक्षेऽपि.

*2320* वृहलौ चललार्जुनौ *for* बृहन्नलौ नलार्जुनौ.

॥ लार्धश्लोकः ॥

**खलं** भूस्थानबन्धेषु पामरक्रूरयोः **खलः** ।
**मलं** पापे च किट्टे च वर्चस्के कृपणे **मलः** ॥

**कुलं** सजातीयगणे गोत्रे जनपदे गृहे ।
**पुलं** विपुलमाख्यातं **पुलः** पुलक इष्यते ॥

**इला** गोवाग्धरित्रीषु कलत्रे चन्द्रजस्य च ।
**जलो** जडमतिः ख्यातो **जलं** ह्रीवेरनीरयोः ॥

**कलिरन्त्ययुगे** युद्धे **कलिः** कलहशूरयोः ।
**शलं** स्याच्छल्लकीलोम्नि [ *90* ] ब्रह्मभृङ्गगणाः **शलाः** ॥

**पीलुर्मतो** गजे वृक्षे क्रिमौ काण्डप्रसूनयोः ।
**कीलः** कफोणिकाघाते स्थाणौ च ज्वलनार्चिषि ॥

---

*2321* लार्द्धः *for* लार्धश्लोकः.

*2322* भूः° *for* भू°; °वंधेषु; *for* °बन्धेषु; °कूरयोः *for* °क्रूरयोः.

*2323* कीट्टे *for* किट्टे.

*2325* पलं *for* पुलं; ईष्यते *for* इष्यते.

*2326* ईला *for* इला; गौरर्द्धरात्रीषु *for* गोवाग्धरित्रीषु; तंत्रजस्य *for* चन्द्रजस्य.

*2327* क्लीवेव° *for* ह्रीवेर°.

*2329* स्याछल्लकी° *for* स्याच्छल्लकी°; वह्म° *for* ब्रह्म°; °भृंगगलः *for* °भृङ्गगणाः ; शलः *for* शलाः.

*2330* पीलुर्म्मतं *for* पीलुर्मतो; कंडि° (*before corr.*) कंडं° (*after corr.*) *for* काण्ड°.

*2331* कफोल्किा° *for* कफोणिका°; स्थाने *for* स्थाणौ; जलनार्च्चिषि *for* ज्वलनार्च्चिषि.

नीलः कपीश्वरे शैले कृष्णे नीलं तु पादपे ।
कूलं स्थाने प्रदीप्ते च भागे सैन्यस्य पश्चिमे ॥

मूलमाद्यान्तिकशिफासूक्ता मूला तु तारका ।
तूलः पिचुः ब्रह्मदारु तूलं तूली सुखासनम् ॥

आलुः कन्दप्रभेदः स्यादालुर्गलन्तिका स्मृता ।
मौलिः संयतकेशेषु चूडामुकुटयोरपि ॥

शैलो गिरौ तु शैलं तु शैलेये तार्क्ष्यशैलके ।
भेलः स्यादुडुपे भीरौ निर्बुद्धिमुनिभेदयोः ॥

वल्ली स्याच्छुपे शूर्मौ वल्ली व्रततिरिष्यते ।
स्थाल्युखा पाटला चैव स्थालं च स्थलभेदनम् ॥

हाला सुरा समुद्दिष्टा हालः स्याच्छालवाहनः ।
बालः केशाङ्गडिम्भेषु ह्रीबेरेऽश्वेभपुच्छयोः ॥

---

2334 आत्यन्तिक° *for* आद्यान्तिक°; °शिफामुक्ता *for* °शिफासूक्ता.
2335 पिचु *for* पिचुः; व्रह्म° *for* ब्रह्म°.
2337 स्संजतकेशेषु *for* संयतकेशेषु.
2338 शैलन्तु *for* शैलं तु; शैलो रक्तार्क्ष्य° *for* शैलेये तार्क्ष्य°.
2339 स्याडडुपे *for* स्यादुडुपे; निर्व्बुद्धि° *for* निर्बुद्धि°.
2340 शूर्म्मौ *for* शूर्मौ; वल्लि *for* वल्ली.
2341 स्थानं *for* स्थालं.
2342 *Drop* समु *after* सुरा; स्याछाल° *for* स्याच्छाल°.
2343 वालः *for* बालः; केश्मकृतिस्तेषु *for* केशाङ्गडिम्भेषु; क्लीवे अश्वेभ° *for* ह्रीबेरेऽश्वेभ°.

**शालः** सर्जतरौ मत्स्ये **शाला** स्कन्धलता कुटी ।
**व्यालः** स्याच्छ्वापदे क्रोधे भुजगे दुष्टदन्तिनि ॥

**सालः** सर्जतरौ वापि सर्गप्राकारयोरपि ।
**जालं** गवाक्षयानाये दन्ते वृन्दे च कोरके ॥

**मालं** क्षेत्रे जने **मालो माला** पुष्पादिनिर्मिता ।
**फालं** स्यात्काशिका दीर्णं वस्त्रे बली तथा कुशी १ ॥

**मल्लश्च** सुभटे पात्रे **मल्लि** च कुसुमान्तरम् ।
**पललं** तिलचूर्णे च **पललं** मांसमुच्यते ॥

**पटलं** तिलके संघे चाक्षिरोगे छदिष्यपि ।
**जगलः** स्यात्पिष्टमद्यं मेदको **जगलः** स्मृतः ॥

**कुशलं** सुकृतौ क्षेमे **कुशलौ** शक्त [ *91* ] शिक्षितौ ।
**धवलः** सुन्दरे श्वेते महोक्षे **धवला** च गौः ॥

---

*2344* मन्ये *for* मत्स्ये; शालः *for* शाला; कंद॰ *for* स्कन्ध॰.

*2345* शलः *for* व्यालः; स्याछापसे *for* स्याच्छ्वापदे; ॰दन्तिणी *for* ॰दन्तिनि.

*2346* सर्ज्जु॰ *for* सर्ज॰.

*2347* गवाक्षे॰ *for* गवाक्ष॰; दन्ति॰ *for* दन्ते; छंदे *for* वृन्दे; कारके *for* कोरके.

*2348* जले *for* जने; पुःपादिनिर्म्मता *for* पुष्पादिनिर्मिता.

*2349* फली *for* फालं; दीर्नं *for* दीर्णं; वलि *for* बली;

*2351* पल्ली *for* पललं; पलनं *for second* पललं.

*2353* जातः *for* जगलः; पिष्टमत्यन्त *for* पिष्टमद्यं; जंगलः *for* जगलः.

*2354* कुशलो *for* कुशलौ.

*2355* महोछे *for* महोक्षे.

शकलं वल्कले खण्डे शकलं रागवस्तु च ।
... ... ... ... ... ...गरलं तृणपूलकः ॥

कुवलं स्यात्कुवलयं कुवलं बदरीफलम् ।
अनलो वायुदेवः स्यादनलः स्याद्विभावसुः ॥

अनिलो वसुभेदे स्यादनिलो मारुतेऽपि च । 2360
विपुलो महति ख्यातो मेरौ मन्ये ? हिमाचलः ॥

निचुलस्तु निचोलः स्यान्निचुलो वृक्ष इत्यपि ।
कुरलः पक्षिभेदः स्यात्कुरलश्चूर्णकुन्तलः ॥

वृषलश्चन्द्रगुप्ते स्याद्वृषलः शूद्र इष्यते ।
उपलौ रत्नपाषाणावुपला शर्करापि च ॥ 2365

कमला श्रीर्जलं पद्मं कमलं कमलो मृगः ।
नकुली शङ्खिनी ज्ञेया नकुलः पाण्डवे पशौ ॥

---

*2356* शंकलं *for the first* शकलं.
*2357* तृणपूरकः *for* तृणपूलकः.
*2358* वदरी° *for* बदरी°.
*2359* श्वलं स्याद् *for* अनलो; स्यात् द्विभा° *for* स्याद्विभा°.
*2360* वसुदेभदेऽनिलः *for* वसुभेदे स्यादनिलः; मारुतेपि *for* मारुतेऽपि.
*2362* निचलः *for the first* निचुलः; ईत्यपि *for* इत्यपि.
*2363* कुवलः *for the first* कुरलः; कुवलः चूर्ण° *for* कुरलश्चूर्ण°.
*2364* शूल *for* शूद्र; ईष्यते *for* इष्यते.
*2365* रन्त° *for* रत्न°.
*2366* दुर् *for* श्रीर्.
*2367* पांडरे *for* पाण्डवे.

**कदली** मृगजातिः स्याद्रम्भापि वैजयन्तिका ।
**अचला** वसुधायां स्याद**चलौ** गिरिनिश्चलौ ॥

**कुन्तलः** कल्पितः केशे यवे जनपदान्तरे ।
**शौष्कल**श्चामिषाशी स्याच्छुष्कमांसपणायकः ॥

**जङ्गलो** निर्जने देशे **जङ्गलं** पिशितं विदुः ।
**कम्बलो** नागभेदः स्यात्सास्नाप्रावारयोरपि ॥

**पांशुलो** हरखट्वाङ्गे पुंश्चले पांशुसंयुते ।
**मञ्जुलः** सुन्दरे प्रोक्तो जलरङ्कपतत्रिणि ॥

**पिञ्जलं** कुशपत्रे स्याद्धरितालं च **पिञ्जलम्** ।
**फेनिलो**ऽरिष्टके फेनयुक्ते कोलं तु **फेनिलम्** ॥

**केवलः** कृत्स्न एकश्च **केवलं** चावधारितम् ।
**जम्भलो** देवताभेदे जम्वीरे **जम्भलः** स्मृतः ॥

---

2370 जले *for* यवे.

2371 शौष्कलं *for* शौष्कलश्; वामिषाशीः ( *before corr.* ) *for* चामिषाशी; स्यात् वृक्ष° ( *before corr.* ), स्यात् शुष्क° ( *after corr.* ) *for* स्याच्छुष्क°; °पर्नायकः *for* °पणायकः.

2373 कंवलो *for* कम्बलो; सात्स्ना° *for* सास्ना° ; °प्रावरयोः *for* °प्रावारयोः.

2375 मंजलः *for* मञ्जुलः.

2376 हरितालञ्च *for* हरितालं च.

2377 फेणिलोमुष्टिके *for* फेनिलोऽरिष्टके; कोलस्तु *for* कोलं तु; फेणिलं *for* फेनिलं.

2378 कृत्स्ने *for* कृत्स्न.

2379 जंवीरे *for* जम्बीरे.

उत्पलः स्यात्कुव[82]लयं कुष्ठं चैव सुगन्धकम् ।　　2380
शृङ्खलं पुंस्कटीकाञ्च्यां शृङ्खलं बन्धनं विदुः ॥

निष्कलं निरञ्जनं स्यान्निष्कला विगतार्तवा ।
पाकलं कुटमाख्यातं गजरोगश्च पाकलः ॥

संकुलं कथितं व्याप्ते विस्पष्टार्थे वचस्यपि ।
मेखला खड्गबन्धे स्यात्काञ्चिशैलनितम्बयोः ॥　　2385

चञ्चला विद्युदाख्याता चञ्चलौ चलकामुकौ ।
इल्वला तारका काचिदिल्वलो दानवान्तरम् ॥

सप्तला चर्मघासा स्यात्सप्तला नवमालिका ।
पिच्छिला शिंशपा मोचा पिच्छिलं विजलं स्मृतम् ॥

---

2380 तत्फलः *for* उत्पलः; कुष्ठयाञ्चैव *for* कुष्ठं चैव.
2381 शृकटीकाच्यां *for* पुंस्कटीकाञ्च्यां; वंधनं *for* बन्धनं.
2382 निष्पलं *for* निष्कलं; स्यान्निरंजनं *for* निरञ्जनं स्यात्; निष्पला *for* निष्कला; विगतार्त्तर्वा *for* विगतार्तवा.
2384 विपष्टार्थे *for* विस्पष्टार्थे.
2385 खड्गवंधे *for* खड्गबन्धे; °नितंवयोः *for* °नितम्बयोः.
2386 चञ्चलोचल° *for* चञ्चलौचल°; °कांवकौ *for* °कामुकौ.
2387 ईल्व *for* इल्वला.
2388 सपूला ( *before corr.* ) *for* सप्तला; चर्म्मघासः *for* चर्मघासा; सपूला *for the second* सप्तला.
2389 पित्सिला *for* पिच्छिला; सिंशपा *for* शिंशपा; पित्सिलं *for* पिच्छिलं; विजरं *for* विजलं.

2390 **रसाल** इक्षौ वृक्षे च **रसालीं** पालकीं ? विदुः ।
**अरालः** कुटिले प्रोक्तो रसः सर्जस्य च स्मृतः ॥

**करालो** दन्तुरे तुङ्गे भीषणे तैलधूणके ।
**प्रवालो** वल्लकीदण्डे विद्रुमे नवपल्लवे ॥

**शृगालो** जम्बुके प्रोक्तो निःसत्त्वे दानवान्तरे ।
2395 **कुलालः** कुम्भकारः स्यात्**कुलालः** कुक्कुभो मतः ॥

**श्रीफलो** वृक्षभेदे स्याच्छ्री**फली** नीलिका स्मृता ।
**मातुलः** स्यात्पितृश्याले धूस्तूरे **मातुलो** मतः ॥

**विशालं** बृहदाख्यातं **विशालो**ज्जयिनी पुरी ।
**कपालं** मस्तकाद्यस्थि घटादिशकलोदरे ॥

2400 **पातालं** नागलोके स्यात्**पातालं** वाडवानले ।
**शार्दूलो** द्वीपिनि श्रेष्ठे पशुपक्षविशेषयोः ॥

**वातुलो** वातसंघाते **वातुलो** मारुतासहे ।
**कुकूलः** स्यात्तुषाग्नौ च शङ्कुकीर्णे वि[93]ले तथा ॥

---

2390 *Drop* शाल्मलीः *before* रसालः; ईक्षौ *for* इक्षौ.
2393 द्रुद्रुमे च *for* विद्रुमे; वन° *for* नव°.
2394 शृंगालः *for* शृगालः; जंबुके *for* जम्बुके; निःसत्वे *for* निःसत्त्वे.
2395 ककुभः *for* कुक्कुभः.
2396 स्यात् श्रीफली *for* स्याच्छ्रीफली; निलिका *for* नीलिका.
2398 बृहत् *for* बृहत ; विशालोजयनी *for* विशालोजयिनी.
2401 शार्दुलः *for* शार्दूलः; द्वीपनिष्टे च *for* द्वीपिनि श्रेष्ठे.
2402 मारूतासहे *for* मारुतासहे.
2403 दुकूलः *for* कुकूलः; तुषाराग्नौ *for* तुषाग्नौ च; विले *for* बिले.

दुकूलं कथितं क्षौमे दूकूलं शुक्लवाससि ।
पटोलावौषधीवस्त्रभेदौ ज्योत्स्नी पटोल्यपि ॥

उत्फुल्लं करणे स्त्रीणामुत्ताले च विकस्वरे ।
पञ्चाली पुत्रिकागीत्योः पञ्चालो जनदेशयोः ॥

यवफलः स्मृतो वेणौ कुटजेऽपि प्रयुज्यते ।
मदकलस्तु मत्तेभे मदेनाव्यक्तवागपि ॥

परिमलो विमर्दे स्यात्सौगन्धे च मनोहरे ।
हस्तिमल्लौ विजानीयादैरावतविनायकौ ॥

महाकालश्च कथितः किंपाके प्रमथे शिवे ।
लोकालोके चक्रवालश्चक्रवालं तु मण्डलम् ॥

उदूखलः कण्डन्यर्थे उदूखलं तु गुग्गुलौ ।
महानीलो भृङ्गराजे मणिनागविशेषयोः ॥

---

2406 उत् फुलं *for* उत्फुल्लं; ङ्करणे *for* करणे; स्त्रीणां प्रक्ते *for* स्त्रीणामुत्ताले; विवश्वरे *for* विकस्वरे.

2408 स्मृतौ *for* स्मृतो; कुटिजेपि *for* कुटजेऽपि.

2409 मदकलन्तु *for* मदकलस्तु; मदेवा° *for* मदेना°.

2412 कींपाके *for* किंपाके; प्रथमे *for* प्रमथे; शीवे *for* शिवे.

2413 चक्रवालो लोकालोके *for* लोकालोके चक्रवालश्; चक्रवालन्तु *for* चक्रवालं तु.

2414 उदूषलः *for* उदूखलः; कंडलाख्ये *for* कण्डन्यर्थे; उदूषलं *for* उदूखलं.

**गण्डशैलो** ललाटे स्यात्प्रस्तरे च गिरिच्युते ।
**खतमालः** स्मृतो धूमे **खतमालो** बलाहकः ॥

**हलाहलो** विषे प्रोक्तो हयलालाह्वयेऽप्यसौ ।
.... .... .... .... **अक्षमाला**प्यरुन्धती ॥

**मणिमाला** तु हारेषु दन्तक्षतान्तरेष्वपि ।
**कृताञ्जलि**रौषधौ स्याद्विहिता येन चाञ्जलिः ॥

**आसुतीवल** आख्यातः कन्यापालकयज्वनोः ।
**पाण्डुकम्बल** इत्येष शिलाकम्बलभेदयोः ॥

॥ लश्लोकः ॥

**फलं** सस्ये शराद्यग्रे फलके व्युष्टिदानयोः ।
लाभे हेतुसमुत्थे च प्रियङ्गुस्तु **फली** स्मृता ॥

**बलं** शक्तिश्च सैन्यं च रूपे स्थौल्ये **बलो**ऽसुरे ।
काके हलिनि शक्ते च **बला** वाट्यालके स्मृता ॥

---

2416 लपाटे *for* ललाटे; स्या *for* स्यात्; °च्युतौ *for* °च्युते.
2417 खतमालल: *for* खतमालः; बलाहकै: *for* बलाहकः.
2418 हयलीलाह्वयेप्यसौ *for* हयलालाह्वयेऽप्यसौ.
2421 स्यात् विहिता *for* स्याद्विहिता.
2422 आश्वती° *for* आसुती°; °यज्वलो: *for* °यज्वनोः.
2423 °कंवल *for* °कम्बल; ईत्येप *for* इत्येष; शीला° *for* शिला°; °कंवल° *for* °कम्बल°.
2425 सीराद्यंगे *for* शराद्यग्रे.
2426 °समुह्ले *for* °समुत्थे.
2427 वलं *for* बलं; वल: *for* बलः.
2428 काको ( *before corr.* ) *for* काके; वला *for* बला.

**तल**श्चपेटस्ताल[94]श्च स्वरूपानूर्ध्वयोस्**तलम्** ।
ज्याघातो ध्रियते येन प्रकोष्ठे तत्**तलं** स्मृतम् ॥

**नलो** नले राज्ञि कपिप्रभेदे कमले **नलम्** ।
**नली** सुगन्धिभेदे च **नलः** स्यात्पितृदेवता ॥

**बलिः** पूजोपहारे स्यात्करचामरदण्डयोः ।
जठरावयवे दैत्ये जरया श्लथचर्मणि ॥

**कला** स्यात्कलनाकालशिल्पादावंशमात्रके ।
धनवृद्धौ विधोरंशे **कलस्तु** मधुरध्वनौ ॥

**शिला** द्वाराधःस्थदारु **शिलमुञ्छः शिला** दृषत् ।
[ शिला मनः ? ]शिलायां स्या**च्छिली** गण्डूपदी मता ॥

**तुला** पलशते माने भाण्डसादृश्ययोरपि ।
गृहाणां दारुबन्धार्थं पीठिकायां **तुलां** विदुः ॥

~~~~~~~~~~

2429 श्वरूपानूर्द्ध्वयोः *for* स्वरूपानूर्ध्वयोः.

2430 दलघातः *for* ज्याघातः; प्रकोष्ठी *for* प्रकोष्ठे.

2431 नरे *for* नले.

2432 स्या *for* स्यात्; °देवताः *for* °देवता.

2433 वलिः *for* बलिः; कव° *for* कर°.

2434 यवया *for* जरया; °चर्म्मणि *for* °चर्मणि.

2435 शील्पादिध्वंसु° *for* शिल्पादावंश°.

2436 विधौवंशे *for* विधोरंशे.

2437 द्वाराधस्थ° *for* द्वाराधःस्थ°; उंजः *for* उञ्छः.

2438 *Read* शिला मनः *before* शिलायां. स्या छिली *for* स्याच्छिली; गंडु° *for* गण्डू°.

2440 दारूवंधार्थे *for* दारुबन्धार्थं; तुला *for* तुलां.
~~~~~~~~~~

**पालिः** कर्णलतायां स्यात्प्रदेशांशाङ्कपङ्क्तिषु ।
... ... ... ... .... ... .... ... ... ॥

**वेला** काले च सीमायां सिन्धोस्तीरविकारयोः ।
अक्लिष्टमरणे राग ईश्वरस्य च भोजने ॥

**शूलं** प्रहरणे योगे **शूलो** व्याधिसुतीक्ष्णयोः ।
**शूलौ** मृत्युध्वजौ चायःकीलः **शूलास्तु** दारिकाः ॥

**तालः** करतले गीते क्रियामाने द्रुमान्तरे ।
मध्यमाङ्गुष्ठकोन्माने **तालं** तु हरितालके ॥

**कालो** यमे महाकाले मृत्यौ समयकृष्णयोः ।
**काली** दुर्गा यामिनी च **काली** स्यान्नववारिदे ॥

**गोला** मनःशिला प्रोक्ता **गोला** गोदावरी स्मृता ।
**गोलः** स्याद्गुडके राज्ञो विधवायाः सुते तथा ॥

**कोलः** स्यादुडुपः पोत्री **कोलः** शस्त्रान्तरं स्मृतम् ।
**कोला** तु पिप्पली च[95]व्यं **कोलं** च बदरीफलम ॥

2441 कर्णि° *for* कर्ण°; प्रदेशा अंक° *for* प्रदेशांशाङ्क°.
2443 °वीकारयोः *for* °विकारयोः.
2444 अक्लीष्ट° *for* अक्लिष्ट°.
2446 °कील *for* °कीलः.
2447 करणले *for* करतले.
2448 तालन्तु *for* तालं तु.
2449 यमो (*before corr.*) *for* यमे.
2452 राजाद्विधवायाः *for* राज्ञो विधवायाः.
2453 शस्त्रन्तरं *for* शस्त्रान्तरं.
2454 वदरी° *for* बदरी°.

चिल्लं स्यादक्षिणि क्लिन्ने चिल्लं क्लिन्नाक्षदेहिनि ।
चिल्लः पक्षिविशेषे च चिल्ली च गौणवास्तुकः ॥

चुल्लं चिल्लमिति प्रोक्तं क्लिन्नाक्षे क्लिन्नचक्षुषि ।
उद्धाने कथिता चुल्ली चितायामपि सा स्मृता ॥

चपलः पारदः प्रोक्तश्चपलश्चेष्टितः स्मृतः ।
चपलं क्षणिकं शीघ्रं चपला पिप्पली तडित्

तरलो भास्वरे लोले हारमध्यमणावपि ।
तरलो मद्यशून्ये [ स्याद् ? ] यवागूस्तरला मता ॥

बहुला कृत्तिका गौस्तु एलाश्च बहुला मता ।
बहुलः कृष्णपक्षोऽग्निर्बहुलो बहुलं शिति ॥

मुसलं स्यादयोग्रं तु मुसली गृहगोधिका ।
मुसली तालमूली स्यान्मुसली चाखुपर्णिका ॥

---

2455 अक्षिणे *for* अक्षिणि; °देहिणि *for* °देहिनि.
2456 चिलः *for* चिल्लः; गौड° *for* गौण°.
2457 चिल्वं *for* चुल्लं.
2459 पादपः (*before corr.*) *for* पारदः; प्रोक्तः *for* प्रोक्तश्; चपलो (*before corr.*) चपलः (*after corr.*) *for* चपलश्.
2460 क्षणीकं *for* क्षणिकं.
2461 भाश्वरे *for* भास्वरे.
2462 मध्य° *for* मद्य°; °शुन्ये *for* °शून्ये; जवागुः *for* यवागूः.
2463 वहुला (*both times*) *for* बहुला; गौरतुलाः *for* गौस्तु एलाः.
2464 वहुलः (*both tims*) *for* बहुलः; °पक्षोग्निः *for* °पक्षोऽग्निः; वहुलं *for* बहुलं; शितिः *for* शिति.
2465 अयोग्रन्तु *bor* अयोग्रं तु.
2466 मुशली *for* मुसली.

**सुतलप्रतलौ** चेति पातालभुवनद्वये ।
स्यातामट्टालिकाबन्धे तताङ्गुलितले क्रमात् ॥

**कपिलो** मुनिभेदः स्यात्**कपिलौ** पिङ्गकुक्कुरौ ।
पुण्डरीकगजस्याख्या **कपिला** शिंशपा च गौः ॥

**पिप्पलं** सलिले ज्ञेयं तरुजातिश्च **पिप्पलः** ।
वस्त्रच्छेदप्रभेदे च **पिप्पली** च कणा स्मृता ॥

**पिङ्गलो** वानरे पिङ्गे भानोश्च पारिपार्श्वके ।
**पिङ्गला** कुमुदाख्यस्य दिङ्नागस्य च हस्तिनी ॥

**मण्डलं** निवहे बिम्बे देशे द्वादशराजके ।
**मण्डलः** कुक्कुरे प्रोक्तः कुष्ठभेदे च **मण्डलम्** ॥

**कन्दली कदली** चेति मृगवृक्षविशेष[96]योः ।
**कन्दलः** कलहे युद्धे कपाले च कलध्वनौ ॥

---

2467 श्वतल° *for* सुतल°.
2468 °वंधे *for* °बन्धे.
2469 °कुकुरौ *for* °कुक्कुरौ.
2471 मलिने *for* सलिले; तरू° *for* तरु°.
2472 वस्त्रछेदः *for* वस्त्रच्छेद°; कला *for* कणा.
2473 भालोः *for* भानोः; परिपार्श्वके *for* पारिपार्श्वके.
2474 पिगला *for* पिङ्गला; दिग्नागस्य *for* दिङ्नागस्य.
2475 विंवे *for* बिम्बे,
2476 मण्डलं *for* मण्डलः.
2477 कन्दलः *for* कन्दली.

**पाटलं पाटला** चेति पुष्पे वृक्षे च **पाटला** ।
**पाटलः** श्वेतरक्तः स्यादाशुव्रीहौ च **पाटलः** ॥

**काहली** तरुणी प्रोक्ता **काहलं** भृशशुष्कयोः ।
**काहला** तुरगोत्साहे वाद्यभाण्डे प्रकीर्तिता ॥

**काकोलो** द्रोणकाके स्यात्**काकोलो** विषमुच्यते ।
**काकोल**श्चापि **काकोली** ख्यातौषधिविशेषयोः ॥

॥ इति लान्तवर्गः ॥

॥ वपादः ॥

**नवः** स्तुतौ **नवो** नव्यः **सान्त्वे** दाक्षिण्यसामनी ।
**किण्वं** पापे सुराबीजे **बिल्वं** स्याच्छ्रीफले फले ॥

**कण्वं** पापे मुनौ **कण्व उर्ध्वमु**परि चोत्थिते ।
**क्षवः** क्षुते राजिकायाम**श्वः** पुंभेदवाजिनोः ॥



2481 भृष॰ *for* भृश॰.
2482 प्रकीर्त्तिताः *for* प्रकीर्तिता.
2485 लान्ताः समाप्ताः *for* इति लान्तवर्गः.
2487 नव *for* नवः.
2488 किन्वं *for* किण्वं; पुवाविजे *for* सुराबीजे; विल्वं *for* बिल्वं; स्यात् श्रीफले *for* स्याच्छ्रीफले.
2489 कंठं (*before corr.*) *for* कण्वं; कण्ठः *for* कण्वः; उर्द्धम् *for* ऊर्ध्वम्; चोथिते *for* चोत्थिते.
2490 क्षुवः *for* क्षवः.

लघ्वी रथप्रभेदेऽपि ग्रीवा शिरापि कीर्तिता ।
क्लीवो निर्विक्रमे शण्ठे केशवः केशवान्हरिः ॥

कैतवं च छले द्यूते दीदिवी मुनिगिष्पती ।
सचिवौ मन्त्रिसहायौ पुंगवौ वृषसत्तमौ ॥

प्रसेवौ स्यूतवीणाङ्गे विद्रवौ धीपलायने ।
कितवौ मत्तधूस्तूरौ गालवौ मुनिलोध्रयोः ॥

पराभवौ नाशावज्ञे परिप्लवौ चपलाकुलौ ।
उपप्लवौ राहुयोगौ जीवंजीवौ द्रुपक्षिणौ ॥

॥ वार्धश्लोकः ॥

वशब्दो वरुणं प्राह इवार्थं च तदव्ययम् ।
लवो रामसुते प्रोक्तो लवश्छेदनलेशयोः ॥

दवो दावश्च विज्ञेयो वनाग्निवनयोरपि ।
भवः संसारसत्ताप्तिश्रेयःशंकरजन्मसु ॥

---

*2491* ⁰प्रभेदेपि *for* ⁰प्रभेदेऽपि; शिवा *for* शिरा; कीर्त्तिता *for* कीर्तिता.
*2492* निविक्रमणे *for* निर्विक्रमे; शंटे *for* शण्टे.
*2493* दिवो *for* दीदिवी.
*2494* पुंगवावुर्द्ध⁰ *for* पुंगवौ वृष⁰.
*2495* स्मृत˚ *for* स्यूत˚; भी⁰ *for* धी⁰.
*2497* परिभवो *for* पराभवौ.
*2498* उपप्लवो *for* उपप्लुवौ; बाहु⁰ *for* राहु⁰.
*2499* वार्द्धः *for* वार्धश्लोकः--
*2500* श्वशब्दो *for* वशब्शे; वेदार्थञ्च *for* इवार्थं च.
*2501* लवे छेन⁰ *for* लवच्छेदन⁰; ⁰लेखयोः *for* ⁰लेशयोः .

धवो नरे धवो वृक्षे धवो भर्ता च योषिताम् ।
हव आह्वानमाख्यातं हव आज्ञा हवः क्रतुः ॥

द्रवो [ 97 ] नर्मणि निर्यासे गतौ पलायनेऽपि च ।
स्रवो यज्ञे च संधाने स्रवं तोयं स्रवं मृतम् ॥

अविर्मेषे गिरौ सूर्ये ऋतुमत्यङ्गनाप्यविः ।
पार्श्वोऽवयवभेदः स्याच्चक्रोपायसमीपयोः ॥

प्राध्वोऽतिमात्रं प्रणतः प्राध्वं बन्धनमुच्यते ।
तत्त्वं ब्रह्मणि तद्भावे वाद्यभेदे च चेतसि ॥

पक्वं विनाशाभिमुखं पक्वं परिणतार्थकम् ।
द्वन्द्वं रहसि चार्थे च वैरे मिथुनयुग्मयोः ॥

विश्वं सर्वं जगच्छुण्ठी विश्वा चातिविषा स्मृता ।
देवी दुर्गा च पूजा च देवौ सुरमहीभुजौ ॥

---

*2504* भत्ता *for* भर्त्ता.

*2505* आह्वानं *for* आह्वानं.

*2506* निर्म्मणि *for* नर्मणि; निर्यासे *for* निर्यासे; पलायनेपि *for* पलायनेऽपि.

*2507* यज्ञ *for* यज्ञे.

*2508* म्मेषे *for* मेषे; अंगनाप्यवा *for* अङ्गनाप्यविः.

*2509* चक्रीपाय° *for* चक्रोपाय°.

*2510* प्राध्वोतिमात्रं प्रगतः *repeated*; प्राध्वोतिमात्रं *for* प्राध्वोऽतिमात्रं; प्रगतः *for* प्रणतः; वन्धुनं *for* बन्धनं.

*2511* व्रह्मणि *for* ब्रह्मणि.

*2512* परिगतात्मकं *for* परिणतार्थकं.

*2514* जगछुंठी *for* जगच्छुण्ठी.

*2515* दुर्गा *for* दुर्गा.

लघ्वी रथप्रभेदेऽपि ग्रीवा शिरापि कीर्तिता ।
क्लीवो निर्विक्रमे शण्ठे केशवः केशवान्हरिः ॥

कैतवं च छले द्यूते दीदिवी मुनिगिष्पती ।
सचिवौ मन्त्रिसहायौ पुंगवौ वृषसत्तमौ ॥

2495 प्रसेवौ स्यूतवीणाङ्गे विद्रवौ धीपलायने ।
कितवौ मत्तधूस्तूरौ गालवो मुनिलोध्रयोः ॥

पराभवौ नाशावज्ञे परिप्लवौ चपलाकुलौ ।
उपप्लवौ राहुयोगौ जीवंजीवौ द्रुपक्षिणौ ॥

॥ वार्धश्लोकः ॥

2500 वशब्दो वरुणं प्राह इवार्थं च तदव्ययम् ।
लवो रामसुते प्रोक्तो लवश्छेदनलेशयोः ॥

दवो दावश्च विज्ञेयो वनाग्निवनयोरपि ।
भवः संसारसत्ताप्तिश्रेयःशंकरजन्मसु ॥

---

2491 °प्रभेदेपि *for* °प्रभेदेऽपि; शिवा *for* शिरा; कीर्त्तिता *for* कीर्तिता.
2492 निविक्रमणे *for* निर्विक्रमे; शंटे *for* शण्टे.
2493 दिवो *for* दीदिवी.
2494 पुंगवावुर्द्द° *for* पुंगवौ वृष°.
2495 स्मृत° *for* स्यूत°; भी° *for* धी°.
2497 परिभवो *for* पराभवौ.
2498 उपप्लवो *for* उपप्लवौ; वाहु° *for* राहु°.
2499 वार्द्धः *for* वार्धश्लोकः--
2500 श्वशब्दो *for* वशब्दो; वेदार्थंञ्च *for* इवार्थं च.
2501 लवे छेन° *for* लवच्छेदन°; °लेखयोः *for* °लेशयोः.

धवो नरे धवो वृक्षे धवो भर्ता च योषिताम्।
ह्वव आह्वानमाख्यातं ह्वव आज्ञा ह्ववः क्रतुः ॥ 2505

द्रवो [ 97 ] नर्मणि निर्यासे गतौ पलायनेऽपि च।
स्रवो यज्ञे च संधाने स्रवं तोयं स्रवं घृतम् ॥

अविर्मेषे गिरौ सूर्ये ऋतुमत्यङ्गनाप्यविः।
पार्श्वोऽवयवभेदः स्याच्चक्रोपायसमीपयोः ॥

प्राध्वोऽतिमात्रं प्रणतः प्राध्वं बन्धनमुच्यते। 2510
तत्त्वं ब्रह्मणि तद्भावे वाद्यभेदे च चेतसि ॥

पक्वं विनाशाभिमुखं पक्वं परिणतार्थकम्।
द्वन्द्वं रहसि चार्थे च वैरे मिथुनयुग्मयोः ॥

विश्वं सर्वं जगच्छुण्ठी विश्वा चातिविषा स्मृता।
देवी दुर्गा च पूजा च देवौ सुरमहीभुजौ ॥ 2515

---

*2504* भत्ता *for* भर्त्ता.

*2505* आह्वानं *for* आह्वानं.

*2506* निर्म्मणि *for* नर्मणि; निर्यासे *for* निर्यासे; पलायनेपि *for* पलायनेऽपि.

*2507* यज्ञ *for* यज्ञे.

*2508* र्मेषे *for* मेषे; अंगनाप्यवा *for* अङ्गनाप्यविः.

*2509* चक्रीपाय° *for* चक्रोपाय°.

*2510* प्राध्वोतिमात्रं प्रगतः *repeated*; प्राध्वोतिमात्रं *for* प्राध्वोऽतिमात्रं; प्रगतः *for* प्रणतः; वन्धुनं *for* बन्धनं.

*2511* व्रह्मणि *for* ब्रह्मणि.

*2512* परिगतात्मकं *for* परिणतार्थकं.

*2514* जगछुंठी *for* जगच्छुण्ठी.

*2515* दुर्गा *for* दुर्गा.

**पृथ्वी** भूमौ त्वक्पत्र्यां च महत्यां कृष्णजीरके ।
**लट्वा** च कथिता धीरैः करञ्जपक्षिभेदयोः ॥

**दिवं** च **त्रिदिवं** चैव स्वर्गान्तरिक्षयोः स्मृतम् ।
**कैरवी** चन्द्रिका प्रोक्ता **कैरवं** कुमुदद्विषोः ॥

**उत्सवो** मह उत्सेके क्रोधाभीष्टप्रसारयोः ।
**उद्धव** उत्सवः प्रोक्त **उद्धवो** मातुलो हरेः ॥

**निह्नव**श्चाप्यविश्वासे निकृतावपलापने ।
**आहवस्तु** निपानं स्यात्संग्रामाध्वरयोपि ॥

**पल्लवः** स्यात्किसलये पिङ्गाश्रृङ्गरयोरपि ।
**सैन्धवो** लवणेऽप्यश्वे **सैन्धवः** सिन्धुदेशजे ॥

**आर्तवमृ**तुसंभूते स्त्रीणां रजसि **चार्तवम्** ।
**भार्गवः** कथितः शुक्रे चापिपरशुरामयोः ॥

2516 *Add* च *after* त्वक्पत्र्यां; कृष्णजीकेर ( *before corr.* ) *fo* कृष्णजीरके.
2517 लट्वा *for* लट्वा.
2518 स्वर्गन्त॰ *for* स्वर्गान्त॰.
2520 उत्सावः *for* उत्सवः.
2521 उद्धवे *for* उद्धव; हरे *for* हरेः.
2522 चातिविश्वासे *for* चाप्यविश्वासे.
2523 आहावः *for* आहवः ; ॰अद्धानयोः *for*॰ अध्वरयोः.
2524 सिञ्या॰ *for* पिङ्ग॰.
2525 लवणेपि *for* लवणेऽपि.
2526 आर्त्तवं ( *both times* ) *for* आर्तवं.

**वल्लवो** भीमसेने स्याद्**वल्लवो** गोपसूदयोः ।
**भैरवः** कथितः शम्भौ **भैरवं** भीषणं स्मृतम् ॥

**पार्थिवः** स्यात्पृथिव्यास्तु विकार ईश्वरेऽपि च ।
**शात्रवः** शत्रुराख्यातः शत्रुभावे च **शात्रवम्** ॥

**आश्रवः** स्यात्प्रति[ *98* ]श्रावे क्लेशे च वचनस्थिते ।
**राजीवो** हरिणे मत्स्ये **राजीवं** सरसीरुहम् ॥

**अभावः** स्यादसत्तायाम**भावो** निधनार्थकः ।
**गाण्डीवं गाण्डिवं** चैव धनुष्यर्जुनधन्वनि ॥

**पञ्चत्वं** मरणे भावे पञ्चानामपि च स्मृतम् ।
**सुग्रीवः** शोभनग्रीवः **सुग्रीवो** वानरान्तरम् ॥

**वडवा** स्त्र्यन्तरे कुम्भदास्यामश्वस्त्रियामपि ।
**कोटवी** चण्डिका ख्याता नग्निका चापि **कोटवी** ॥



*2528* वल्लवो भीमसेने स्याद् *repeated*; वल्लवः ( *both times* ) *for* बल्लवः.

*2529* शंभो *for* शम्भौ.

*2530* पृथिव्यान्तु *for* पृथिव्यास्तु; ईश्वरेपि *for* ईश्वरेऽपि.

*2532* क्रोशे *for* क्लेशे.

*2533* मत्से *for* मत्स्ये.

*2534* असत्तायां अभावः *for* असत्तायामभावः ; निधनात्मकः *for* निधनार्थकः.

*2539* *Add* अपि *after* च.

अनुभावः प्रभावे स्यान्निश्चये भावबोधके ।
अपह्नवोऽपलापः स्यात्स्नेहश्चापह्नवो मतः ॥

सहदेवौषधिः काचित्सहदेवश्च पाण्डवः ।
कुशीलवश्च वाल्मीकिर्नटाश्चापि कुशीलवाः ॥

अभिषवः स्मृतः स्नाने मद्यसंधानयज्ञयोः ।
पारसवः शस्त्रभेदे शूद्रापुत्रे द्विजोद्भवे ॥

आदीनवः परिक्लिष्टो दोषश्चादीनवो मतः ।
शीतशिवं मधुरिका शमी सैन्धवशैलजम् ।
आशितंभवमन्नाद्यं तृप्तिरप्याशितंभवः ॥

॥ वश्लोकः ॥

शिवं भद्रं शिवः शम्भुः शिवो मुक्तिः... ... ।
शिवः कीलः शिवो वेदो ग्रहयोगः शिवः स्मृतः ॥

---

2540 °बोधक्के *for* °बोधके.
2541 अपक्कवः ( *both times* ) *for* अपह्नवः.
2543 वाल्मीकीः *for* वाल्मीकिः ; लुन्टाः ( *before corr.* ) *for* नटाः.
2544 अभिसवः *for* अभिषवः.
2545 शुद्रा° *for* शूद्रा°.
2546 आदीलवः ( *both times* ) *for* आदीनवः.
2547 समी *for* शमी; सैलजं *for* शैलजं.
2550 शीवः *for the second* शिवः.
2551 शिवं ( *before corr.* ) *for* शिवः; देवः *for* वेदः.

शिवा झटामला प्रोक्ता शिवा गौरी शिवाभया ।
शिवा शमी शिवा क्रोष्ट्री भवेदामलकी शिवा ॥

सत्त्वं द्रव्ये स्वभावेऽपि पिशाचादौ गुणे रसे ।
आयुधे व्यवसाये च वृद्धौ प्राणेषु जन्तुषु ॥ 2555

प्लवो भेके च चण्डाले प्लवनोडुपयोः प्लवः ।
क्रमनिम्ने भुवो भागे पक्षिभेदे च मुस्तके ॥

भावः सत्ताभिप्राये च चेष्टाधात्वर्थयोनिषु ।
क्रियालीलोपदेशेषु विभूतिबुधजन्मसु ॥

कविर्विद्वान्कविः शु[99]क्रः कविः काव्यकरः स्मृतः । 2560
कविः स्मृतश्च वाल्मीकिः खलिने तु कविर्मता ॥

जीवा तु जीवितं जीवं जीवौ कर्णबृहस्पती ।
जीवो वृक्षप्रभेदः स्याज्जीवा जीवन्तिकौषधी ॥



2553 समी *for* शमी; क्रोष्टी *for* क्रोष्ट्री.
2554 सत्वं *for* सत्त्वं; द्रव्येषु भागेषुं *for* द्रव्ये स्वभावेऽपि; पिसाचादौ *for* पिशाचादौ.
2555 आयुधे *for* आत्मत्वे; प्राणिषु *for* प्राणेषु.
2556 भेद्ये *for* भेके; गंडाले *for* चण्डाले.
2557 क्रमनिन्दे *for* क्रमनिम्ने.
2558 *Add* च *after* अभिप्राये.
2559 °नीलोपदेशेषु *for* °लीलोपदेशेषु; विभूतिर्° (*before corr.*) *for* विभूति° ; °वुध° *for* °बुध°.
2561 खलिते *for* खलिने; कविर्म्मता *for* कविर्मता.
2562 °वृहस्पती *for* °बृहस्पती.
2563 स्या *for* स्याज्.

**नीवीं** ग्रन्थिं विदुर्नारीजघनस्य च वाससः ।
धनं चोपचयाजीवैर्मूलं यस्य न हिंस्यते ॥

**संभवं** मेलकं विद्यादुत्पत्तिरपि **संभवः** ।
आधारानतिरिक्तत्वमाधेयस्य च **संभवः** ॥

**माधवौ** विष्णुवैशाखौ वसन्तयादवावपि ।
**माधवी** मदिरा प्रोक्ता **माधवी** चातिमुक्तके ॥

**वाडवं** करणे स्त्रीणां बहुशिल्पकृतात्मनाम् ।
**वाडवं** वडवासंघे **वाडवो** ब्राह्मणौर्वयोः ॥

**प्रसवः** कथितोऽपत्ये उत्पादे गर्भमोचने ।
पुष्पं फलं च वृक्षाणां **प्रसवं** परिचक्षते ॥

**प्रभवो** जन्महेतुः स्यात्**प्रभवो** मूलमप्यपाम् ।
**प्रभवं** केचिदिच्छन्ति स्थानमाद्योपलब्धये ॥

॥ इति वान्तवर्गः ॥

2565 मुलं *for* मूलं; यच *for* यस्य.
2567 आधनेमतिरिक्तत्वं *for* आधारानतिरिक्तत्वं.
2568 °पादपावपि *for* ° यादवावपि.
2570 वहु° *for* बहु°.
2571 °शंखे *for* °संघे; ब्राह्मण° *for* ब्राह्मण°.
2572 कथितोपत्ये *for* कथितोऽपत्ये; उत्पाते *fof* उत्पादे.
2574 प्रभावः *for* प्रभवः; यन्महेतु *for* जन्महेतुः.
2575 इछन्ति° *for* ईच्छन्ति; आखोपलब्धये *for* आद्योपलब्धये.
2576 वांतः समाप्तः *for* इति वान्तवर्गः.

॥ शपादः ॥

ईशः प्रभौ च शम्भौ च राशिमेषादिपुञ्जयोः ।
अंशुर्लेशे च रश्मौ स्यादाशा तृष्णादिशोः स्मृता ॥

स्पशौ प्रणिधिसंग्रामावाशू च व्रीहिसत्वरौ । 2580
निस्त्रिंशौ क्रूरखङ्गौ तु बालिशौ मूर्खशावकौ ॥

संकाशौ निभतुल्ये यौ ? विकाशो विजने स्फुटे ।
निवेशौ शिबिरोद्वाहौ निदेशः शिष्टभाषणे ॥

पक्षीशो गरुडे विष्णावद्रीशोऽद्रिपतौ शिवे ।
अम्बरीशं रणे भ्राष्ट्रे जीवितेशो यमे प्रिये ॥ 2585

॥ शार्धश्लोकः ॥

विट्ट स्मृतो मनुजे वैश्ये प्रवेशे विट् च कीर्तिता ।
दृक् स्मृता दर्शने बुद्धौ नेत्रे च दृक् च वीक्षणे ॥

---

2578 स्मेषादि° *for* मेषादि°.

2579 वेशे *for* लेशे.

2580 आशु *for* आशू.

2581 नस्त्रिशौ *for* निस्त्रिंशौ; क्रुर° *for* क्रूर°; °खङ्गौ *for* °खङ्गौ वालिशौ *for* बालिशौ; मुर्ख° *for* मूर्ख°; °सावकौ *for* °शावकौ.

2582 ° तुल्येयो *for* तुल्ये यौ; विजन *for* विजने.

2583 शिविर° *for* शिबिर°; °भाजने *for* °भाषणे.

2584 पक्षीशौ *for* पक्षीशो; विष्णव् ( *before corr.* ), विष्णौव् ( *after corr.* ) *for* विष्णाव्; अद्रीशोद्रि° *for* अद्रीशोऽद्रि°.

2585 अंवरीशं *for* अम्बरीशं. रखे *for* रणे; राष्ट्रे *for* भ्राष्ट्रे; पमे *for* यमे.

2586 शार्द्धः *for* शार्धश्लोकः.

2587 विट *for* विट्; प्रवेसे *for* प्रवेशे; कीर्त्तिता *for* कीर्तिता.

2588 वृद्धौ *for* बुद्धौ.

**दशावस्था** [*100*] **दशा** वर्तिर्वाससोऽवयवो **दशा** ।
**निशा** रात्रौ हरिद्रायां महापूर्वार्धरात्रके ॥

**पांशुर्धूलि**षु सस्यार्थे चिरसंचितगोमये ।
**केशो**ऽसुरान्तरे **केशा** ह्रीवेराप्पतिकुन्तलाः ॥

**काशा**स्तृणविशेषे स्युः **काशी** वाराणसी पुरी ।
**वेशो** गृहे प्रवेशे च वेश्यावासे च भूषणे ॥

**नाशः** पलायने प्रोक्तो निधनानुपलम्भयोः ।
**दंशः** स्यात्खण्डने दोषे **दंशश्च** वनमक्षिका ॥

**दर्शस्तु** स्यादमावास्या यश्चात्र वैदिको विधिः ।
**स्पर्शः** स्यात्स्पर्शके रोगे दानस्पर्शनयोरपि ॥

**पेशी**मण्डे मांसपिण्ड्यां मांसक्राख्यौषधिं विदुः ।
**कपिशः** कपिले प्रोक्तः **कपिशी** मदिरा मता ॥

---

*2589* वर्त्तिः *for* वर्तिः; वासवः *for* वाससः.
*2590* अर्द्ध° *for* अर्ध°.
*2592* ह्रीरेवाप्रतिकुन्तला *for* ह्रीवेराप्पतिकुन्तलाः.
*2593* वारानसी *for* वाराणसी.
*2594* °वास्ये *for* °वासे.
*2596* खंजने *for* खण्डने.
*2597* अमावास्या *for* अयावास्या.
*2598* पंर्शके *fov* स्पर्शके.

विवशः स्यादवश्यात्मा विवशोऽरिष्ट दुष्टधीः ।
कुलिशं त्वस्थिसंहारसंज्ञौषधिः स्वरुस्तथा ॥

सदेशसवेशौ निकटे देशवेशान्वितौ क्रमात् ।
निर्वेशस्तु भृतौ भोगे क्वापि संमूर्च्छने स्मृतः ॥

प्रदेशो देशमात्रेऽपि तर्जन्यङ्गुष्ठसंमिते ।
उड्डीशो ग्रन्थभेदे स्यादुड्डीशः शंकरः स्मृतः ॥

उपांशुर्जपभेदे स्यादुपांशु विजनेऽव्ययम् ।
आदर्शो दर्शने प्रोक्तो मूलं यल्लिखनादिके ॥

सुखाशो राजतिमिषे आशा यस्य सुशोभना ।
कीनाशोऽपांशुर्विख्यातः कदर्ये कर्षके यमे ॥

---

2601 अवस्यार्थः *for* अवश्यात्मा.
2602 दुस्थिसंहार° *for* त्वस्थिसंहार° ; °संज्ञौषधि *for* °संज्ञौषधिः; स्वरः *for* स्वरुः.
2603 देशा° *for* देश°.
2604 भागे *for* भोगे; समुच्छ्रये *for* संमूर्च्छने.
2605 देशमात्रेपि *for* देशमात्रेऽपि.
2606 ऊडीशः *for* उड्डीशः; उडीशः *for* उड्डीशः ; शंकर *for* शंकरः.
2607 उपांशु *for* उपांशुर्; विजनेव्ययं *for* विजनेऽव्ययम्.
2608 पल्लिखनादिके *for* यल्लिखनादिके.
2609 °तिसिरे *for* °तिमिषे; आसा *for* आशा.
2610 *Add* कीनाशः *at the beginning of a pada*; संशवे *for* ऽपांशुर्वि° ; कर्ये *for* कदर्ये.

प्रकाशोऽतिप्रसिद्धे स्यादातपे च स्फुटेऽपि च ।
दुःस्पर्शाख्या खरस्पर्शं कण्टकारी दुरालभा ॥

विपाशा निम्नगा काचिद्विपाशा पाशवर्जिता ।
विकेशी पटवर्तिः स्याद्विकेशी केशवर्जिता ॥

उपस्पर्शो गौण ? स्पर्शे स्नानाचमनयोरपि ।
[ 101 ] उपदंशो विदंशः स्याच्छेकाव्याधावपि स्मृतः ॥

प्रतिस्पर्शः सहाये स्याद्वार्ताहारपुरोगयोः ।
अपदेशं विदुर्लक्षे निमित्तव्याजयोरपि ॥

परिवेशः परिवृतावुपसूर्यकमण्डले ।
आश्रयाशः स्मृतो वह्निर्योऽपि चाश्रयनाशकः ॥

नागपाशः स्मृतः स्त्रीणां करणे वारुणायुधे ।
पलंकशा च मुण्डीरीलाक्षागुग्गुलकेषु च ॥

---

2611 प्रकाशोति° *for* प्रकाशोऽति° ; स्फुटेपि *for* स्फुटेऽपि.

2612 दुस्पर्शाख्या *for* दुःस्पर्शाख्या; कटंकारी *for* कण्टकारी; दुरानभा *for* दुरालभा.

2613 पिपाशा (*before corr.*) *for* विपाशा.

2614 पट्टवर्त्तिः *for* पटवर्तिः.

2615 गौन° *for* गौण° ; °आचमलयोः *for* °आचमनयोः.

2616 स्याछेका° स्याच्छेका°; अपी *for* अपि.

2617 महाये *for* सहाये; वार्त्ता° *fov* वार्ता° ; °प्ररोगयोः *for* °पुरोगयोः.

2620 योप्याश्रयः *for* योऽपि चाश्रयः.

2622 पलंकाशा *for* पलंकशा; खंडीरी° *for* मुण्डीरी°.

|| शश्लोकः ||

वशः प्रभुत्व आयत्त इच्छायत्तत्वयोर्विदुः ।
वशाश्चतस्रो वन्ध्या गौः सुता नारी करेणुका ॥

पशुर्मृगादौ छगले पशुः स्याद्यज्ञवाचकः ।
पशुः संसारिणामात्मा पशु दृश्यार्थमव्ययम् ॥

शशः पुरुषभेदः स्याच्छशः स्याच्चन्द्रलाञ्छनम् ।
शशो गन्धरसः प्रोक्तः शशकाख्यः पशुः शशः ॥

कुशा वल्गा कुशी फालः कुशो दर्भः कुशं जलम् ।
कुशो रामसुते द्वीपे कुशो यज्ञाङ्गबन्धनम् ॥

वंशः संघे कुले वेणौ वाद्यभाण्डे विशेषतः ।
नासाविवरदेशे च पृष्ठमध्यास्थि च स्मृतम् ॥

पाशः खगादिबन्धे स्यात्केशौघे केशपूर्वकः ।
कर्णपूर्वः सुकर्णे च **पाशी ... ...** ॥

---

*2624* प्रभुद्धे *fro* प्रभुत्व; ईछायत्ताद्वयोः *for* इच्छायत्तत्वयोः.
*2625* चतओ *for* चतस्रो; स्वतत्वर्या *for* सुता नारी.
*2627* पशुर्दशार्थं *for* पशु दृश्यार्थं.
*2628* स्याछशः *for* स्याच्छशः.
*2629* गंधवशः *for* गन्धरसः; सशः (*before corr.*) *for* शशः.
*2630* वज्रां *for* वल्गा; कालः *for* फालः.
*2631* भग्नांगवंधनं *for* यज्ञाङ्गबन्धनं.
*2632* संसंघे *for* संघे.
*2633* नाशा° *for* नासा.°
*2634* °वंधे *for* बन्धे; केकेश° *for* केश°.
*2635* स्वकर्णे *for* सुकर्णे; गुतपुरस्करं *for*

**कर्कशः** स्यात्साहसिके खरस्पर्शे च **कर्कशः** ।
काम्पिल्यः **कर्कशः** प्रोक्तः **कर्कशो** निर्दयोऽपि च ॥

**पलाशो** निर्दये प्रोक्तः **पलाशः** किंशुकः शटी ।
**पलाशा** राक्षसाः प्रोक्ताः **पलाशं** पत्रमुच्यते ॥

॥ इति शान्तवर्गः ॥

॥ षपादः ॥

**विट्** च व्याप्तिस्तथा विष्ठा त्विट् च शोभा [102] तथा प्रभा ।
**ऋषिर्वेदे** मुनौ रश्मौ **शुषिः** शोषः **शुषिर्बिलम्** ॥

**मिषं** व्याजो **मिषं** स्पर्धा **शोषः** शोषणयक्ष्मयोः ।
**किल्बिषा** मदिरा द्रोहे **कलुषं** पापमाविलम् ॥

---

2636 खरः सर्पे *for* खरस्पर्शे.

2637 कांपिल्वः *for* काम्पिल्यः; कर्कशः प्रोक्तः *repeated*; निर्दयोपि *for* निर्दयोऽपि.

2639 प्रोक्ता *for* प्रोक्ताः.

2640 शान्ताः समाप्ताः *for* इति शान्तवर्गः.

2641 षपादोदा *for* षपादः.

2642 विड *for* विट् च; व्याप्तिश्च तथा *for* व्याप्तिस्तथा; विष्टा *for* विष्ठा; विट *for* त्विट् च.

2643 देवे *for* वेदे; सुनौ *for* मुनौ; विलं *for* बिलं.

2644 व्याजा *for* व्याजो. स्पर्द्धा *for* स्पर्धा. ⁰यक्षयोः *for* ⁰ यक्ष्मयोः.

2645 किल्विषा *for* किल्बिषा; पादं *for* पापं.

अभीषुः प्रग्रहे भासि प्रदोषः कालदोषयोः ।
प्रत्युषौ प्रभातवसू शैलूषौ बिल्वनर्तकौ ॥

॥ षार्धश्लोकः ॥

विषं हालाहलं प्रोक्तं प्रोक्ता चातिविषा विषा ।
... ... ... .... ....झषो मत्स्य उदाहृतः ॥ 2650

... .... .... ... ...प्राषः षोडशरक्तिका ।
... ... ... .... ....महिषी राजकामिनी ॥

अनुकर्षो रथस्याधोदारुण्यप्यनुकर्षणे ।
अनुतर्षः सुरापानपात्रं तृष्णा च कीर्तिता ॥

नन्दिघोषोऽर्जुनरथो घोषो बन्दिजनस्य च । 2655
किंपुरुषो लोकयातुभेदे किंपुरुषो मयुः ॥

॥ षश्लोकः ॥

वृषः श्रेष्ठाखुधर्मेषु प्राह्यदे ? शुक्रले गवि ।
वृषः कोवालिभेदे ? च वृषा मूषिकपर्णिका ॥

---

2646 अमीष्ट ( *before corr.* ) *for* अभीषुः; भावि *for* भासि.
2647 सन्नुषा *for* शैलूषौ; विंव॰ *for* बिल्व॰; ॰नर्त्तकौ *for* ॰नर्तकौ.
2648 *Add* षार्धश्लोकः.
2649 विषा चातिविषा प्रोक्ता *for* प्रोक्ता चातिविषा विषा.
2653 रथस्यादौ॰ *for* रथस्याधो॰; अनुकर्षणोः *for* अनुकर्षणे.
2654 अनकर्ष *for* अनुतर्षः; कीर्त्तिता *for* कीर्तिता.
2655 नन्दिघाषो *for* नन्दिघोषो; वंदि॰ *for* बन्दि॰.
2656 लोकधातुभेदे *for* लोकयातुभेदे.

**शेषं** हलायुधेऽनन्ते उपयुक्तेतरे विदुः ।
प्रसादे निजनिर्माल्यदत्तिः **शेषे**ति कीर्तिता ॥

**कोषो** दिव्ये धने पेश्यां कुड्मलासिपिधानयोः ।
पनसादिफलस्यान्तः **कोषः** शब्दादिसंग्रहः ॥

**आकर्षः** शारिफलके द्यूतपाशकयोरपि ।
स्यादाकर्षणम्**आकर्षो** धनुरभ्यासवस्तु च ॥ ...

**गण्डूषो** मुखपूर्तौ स्यात्करिहस्ताङ्गुलावपि ।
**गण्डुषो**ऽपि च **गण्डूषो**ऽप्यङ्गुल्यर्धत एव च ॥ ... ...

**पौरुषं** पुरुषस्योक्तं भावे कर्मणि रेतसि ।
ऊर्ध्वबाहुद्वयोर्माने पुंसः **पौरुष**मुच्यते ॥

**आमिषः** स्याद्भोग्यवस्तु भोजने पलले [ *103* ] ऽपि च ।
... ... ... ... ... .... ... .... ... ... ... ॥

॥ [ इति षान्तवर्गः ] ॥

---

*2660* हलायुधेनन्ते *for* हलायुधेऽनन्ते; °भरे *for* °तरे.

*2661* प्रासादे *for* प्रसादे; निजनिर्म्माल्येदातुः *for* निजनिर्माल्यदत्तिः; कीर्त्तिता *for* कीर्तिता.

*2662* द्रव्ये *for* दिव्ये; धनो *for* धने; पश्यां *for* पेश्यां; कुटनासिधानयोः *for* कुड्मलासिपिधानयोः.

*2663* शब्दादि° *for* शब्दादि°.

*2664* सारि° *for* शारि°; त्युड्° *for* द्यूत°.

*2666* गंडुषः ( *before corr.* ) *for* गण्डूषः; मुखपुर्त्ते *for* मुखपूर्तौ.

*2667* गंडुषोपि *for* गण्डुषोऽपि; गंडुषोपि *for* गण्डूषोऽपि; °अर्द्धत° *for* °अर्धत°.

*2669* उर्द्धवाहु° *for* ऊर्ध्वबाहु°; माले *for* माने.

*2670* भिन्न° *for* भोग्य°; पल्नेपि *for* पललेऽपि.

*2671* *After this line, the text reads as–* क्षान्ता यद्यदि षान्ताः तथाप्यक्षरक्रमानुरोधेन हान्तनिर्देशः.

*2672* *Add* इति षान्तवर्गः.

॥ सपादः ॥

मासं स्यान्मासके चन्द्रे भाः स्यात्तु किरणेच्छयोः ।
व्यासो मुनौ विस्तरे स्यादंसः स्कन्धविभागयोः ॥

प्रसूर्मातरि चाश्वायां त्रासो भीमणिदोषयोः ।
शंसा तु वचनं वाञ्छा हिंसा चौर्यादिकं वधः ॥

वेधा विद्वानपि ब्रह्मा वर्चांसि रूपविट्त्विषः ।
एनोऽपराधे दुरिते आगः पापापराधयोः ॥

बर्हिर्दर्भे हुताशे स्यादर्चिर्धाममयूखयोः ।
स्रोतोऽम्बुवेगेन्द्रिययो रोकश्चाश्रयसद्मनोः ॥

वसुरश्वेऽश्वमेधाख्ये उषः सन्ध्याप्रभातयोः ।
हविः सर्पिषि होतव्ये वपुर्भव्याकृतौ तनौ ॥

---

*2674* मांसं *for* मासं; माषके *for* मासके. °छयोः *for* °च्छयोः.

*2675* अंशः *for* अंसः.

*2676* त्रसः ( *before corr.* ) *for* त्रासः; भीमनिदाघयोः ( *before corr.* ) *for* भीमणिदोषयोः.

*2678* विद्यान् *for* विद्वान् ; व्रह्मा *for* ब्रह्मा; °द्विषः *for* °त्विषः.

*2679* एनोपराधे *for* एनोऽपराधे; त्वरिते *for* दुरिते; आगधः *for* आगः; °पवाधयोः *for* °पराधयोः.

*2680* वर्हिस् *for* बर्हिस् ; अर्चिर्द्धाम° *for* अर्चिर्धाम°; °मयूषयोः *for* मयूखयोः.

*2681* ओतोंवु° *for* स्रोतोऽम्बु°; आम्नाय° *for* °आश्रय°.

**तरः** स्याद्वेगबलयो **रहः** सुरतगुह्ययोः ।
**उरः** श्रेष्ठमु**रो** वक्षः **पयः** क्षीरं **पयो** जलम् ॥

**महो** हर्षो **महस्तेजो मनो** ... ... ।
**इष्वासो** धन्विधनुषो **रभसो** वेगहर्षयोः ॥

**विकासः** स्फुटने व्यक्ते **मानसं** हृदयं सरः ।
**राक्षसी** गन्धद्रव्येऽपि **सुरसा** चौषधावपि ॥

**वायसी** काकमाची स्याद**भ्यासो** निकटेऽपि च ।
**उदर्चि**रुत्प्रभे वह्नौ **दिवौका**श्चातके सुरे ।
**निःश्रेयसं** शिवो मोक्षः **श्वःश्रेयसं** शिवं सुखम् ॥

॥ सार्धश्लोकः ॥

**रासः** स्याद्गोदुहां क्रीडा **रासो** ध्वनिरुदाहृतः ।
**वत्सं** वक्षसि **वत्सस्तु** शिशुके वत्सरेऽपि च ॥

---

2684 °वलयोः *for* °बलयोः.
2685 श्रेष्ठंवरे *for* श्रेष्ठमुरो; पय *for* पयः; क्षीर *for* क्षीरं.
2686 °मितिः *for* मति°.
2687 ईष्वासः *for* इष्वासः.
2688 मनः *for* सरः.
2689 °द्रव्येपि *for* °द्रव्येऽपि.
2690 निकटेपि *for* निकटेऽपि.
2691 उदर्चिः *for* उदर्चिः; उप्रभे *for* उत्प्रभे; दिवौकः *for* दिवौकाः.
2692 निःश्रेयसम्वसि *for* निःश्रेयसं शिवो.
2693 सार्द्धः *for* सार्धश्लोकः.
2694 ध्वनिरूदाहृतः *for* ध्वनिरुदाहृतः.
2695 वत्स *for* वत्सं; वस्तस्तु *for* वत्सस्तु; वत्सरेपि *for* वत्सरेऽपि.

**वासो**ऽवस्थितौ गेहे **वासो** वासक इष्यते ।
**गोसः** प्रभात आख्यातो **गोसो** गन्धरसः स्मृतः ॥

**मांसं** पिशि [ *104* ] तमुद्दिष्टं **मांसी** तु मांसिकौषधिः ।
**मिसिर्**मधुरिकायां स्याच्छतपुष्पा **मिसिः** स्मृता ॥

**नासा** च नासिका ज्ञेया **नासा** द्वारोर्ध्वदारु च । 2700
**धनु**श्चापे राशिभेदे प्रियालाख्यद्रुमो **धनुः** ॥

**तमो** ध्वान्तं **तमो** राहुस्**तमः** शोकस्**तमो** गुणः ।
**रजो** गुण **रजो** रेणुर्योषितामार्तवं **रजः** ॥

**वयो** बाल्यादि पक्षी च यौवनं च क्वचिद्**वयः** ।
**सहो** बलं **सहो** मार्गो हेमन्तश्च **सहाः** स्मृतः ॥ 2705

**ओजो** बलमवष्टम्भ **ओजो** रश्मिप्रकाशयोः ।
**छन्दः** पद्ये च वेदे च **छन्द**श्छन्दानुवर्तनम् ॥

---

2696 वत्सौवस्थितौ *for* वासोऽवस्थितौ; ईष्यते *for* इष्यते.
2698 पिसितं *for* पिशितं.
2699 मिसिर्म्मधु° *for* मिसिर्मधु°; स्याछत° *for* स्याच्छत°.
2700 द्वारोर्द्धदारू *for* द्वारोर्ध्वदारु.
2702 शोक तमः *for* शोकस्तमः.
2703 आर्त्तवं *for* आर्तवं.
2704 वाल्यादि *for* बाल्यादि; कुचद्वयं *for* क्वचिद्वयः.
2705 वलं *for* बलं.
2706 वलं *for* बलं.
2707 च्छन्दानुवर्त्तनं *for* छन्दानुवर्तनं.

**तेजो** वले च शुक्रे च प्रभावे क्रिरणेऽपि च ।
**वासो** वस्त्रे समाख्यातमोष्ठे दन्तादिपूर्वकम् ॥

**ज्योति**र्वह्नौ रवौ नेत्रे दीप्तौ च तारकासु च ।
**ज्यायान्** श्रेष्ठे च वृद्धे च प्रशस्येऽतितरामपि ॥

**विद्वान्** ज्ञानिनि धीरे च **विद्वान**ध्यात्मवेदकः ।
**भूयान्**बहुतरार्थः स्यात्पुनरर्थे तदव्ययम् ॥

**आशीर**भीप्सिताशंसा दंष्ट्रा**शीर**निलाशिनाम् ।
**पनसः** कण्टकीफलः **पनसो** वानरान्तरम् ॥

**सारसो** विहगे चन्द्रे **सारसं** सरसीरुहम् ।
**कीकसाः** क्रमयः सूक्ष्मा अस्थि **कीकस**मिष्यते ॥

**लालसं** विदुरौत्सुक्ये याच्ञातृष्णातिरेकयोः ।
**साहसं** तु बलात्कारकृतं कर्म दमस्तथा ॥

---

2708 वले *for* बले; करणेपि (*before corr.*), क्रिरणेपि (*after corr.*) *for* क्रिरणेऽपि.

2709 समाख्यात ओष्ठे *for* समाख्यातमोष्ठे.

2711 ज्यायान *for* ज्यायान्; प्रसज्ये *for* प्रशस्ये.

2712 विद्वन् *for* विद्वान्.

2713 भूयान *for* भूयान्; वहु° *for* बहु°.

2714 आसीर् *for* आशीर्; °संशा *for* °शंसा; अनिलाशिला *for* अनिलाशिनाम्.

2715 वानसान्तरं *for* वानरान्तरं.

2717 कीकसा *for* कीकसाः; ईष्यते *for* इष्यते.

2718 लालसो *for* लालसं; ओत्सुक्ये *for* औत्सुक्ये; याचिञा° *for* याच्ञा°; °तृष्णतिरेकयोः *for* तृष्णातिरेकयोः.

2719 साहसन्तु *for* साहसं तु; वलात्कारे *for* बलात्कार°; कृत *for* कृतं; कर्म्म *for* कर्म; दमन्तथा *for* दमस्तथा.

वरासिः स्यात्खड्गधरो वरासिः स्थूलशाटकः । 2720
समासोऽप्युक्तः संक्षेपः समासः स्यात्समर्थनम् ॥

आश्वासः स्यात्समाश्वासे गद्यबन्धगुणोऽपि च ।
उत्तंसोऽप्यवतंसश्च कर्णपूरे च [ 105 ] शेखरे ॥

प्रहासः स्यान्नटवटौ हास्यतीर्थविशेषयोः ।
कुल्मासश्च यवे प्रोक्तः काञ्चिके यवपिष्टके ? ॥ 2725

साधीयानतिबाढः ? स्यात्साधीयानतिशोभनः ।
वरीयानतिविस्तीर्णो हेति ? सत्तमयोगयोः ॥

कनीयाननुजे प्रोक्तो यूनि चाल्पे च कीर्तितः ।
विहायसं विदुर्व्योम पक्षिणश्च विहायसः ॥

सुमनसः स्मृताः पुष्पमालतीसुरपण्डिताः । 2730
प्रचेतसस्त्रयः कृष्णमुनिभेदजलेश्वराः ॥

---

2720 स्थुलसाकटः ( *before corr.* ) स्थुलशाटकः ( *after corr.* ) *for* स्थूलशाटकः.
2721 समासोप्युक्ति *for* समासोऽप्युक्तः.
2722 पद्यगंधगुणोपि *for* गद्यबन्धगुणोऽपि.
2723 °पुरे *for* °पूरे; शेषरे *for* शेखरे.
2724 °वटो *for* °वटौ.
2725 कुल्मासश्च *for* कुल्मासश्च; शरे *for* यवे; पूरं° *for* यव°.
2726 साधि° *for* साधी° ; °वचः *for* °बाढः; इति° *for* अति°.
2728 अनुजो *for* अनुजे; पुनि *for* यूनि; वापे *for* चाल्पे; कीर्त्तित *for* कीर्तितः.
2730 °स्वर° *for* °सुर°.
2731 °जनेश्वराः *for* °जलेश्वराः.

**सप्तार्चि**र्वह्निराख्यातः **सप्तार्चि**श्च शनैश्चरः ।
**अगौका**श्च **नगौका**श्च शरभे सिंहपक्षिणोः ॥

**विभावसुः** स्मृतः सूर्ये हारभेदे च पावके ।
**पुनर्वसुः** ऋक्षभेदे कात्यायनः **पुनर्वसुः** ॥

**विश्वावसु**र्निशायां स्याद्देवानां गायनेऽपि च ।
**अधिवासो** निवासे स्यात्संस्कारे धूपनादिना ॥

**चन्द्रहासो** रावणासिरसिमात्रे च कीर्तितः ।
**अवध्वंसः** परित्यागे निन्दनेऽप्यवचूर्णने ॥

**अपभ्रंश**स्तु पतने भाषाभेदापशब्दयोः ।
**दिव्यचक्षुः** सुगन्धः स्यादन्धो यश्च सुलोचनः ॥

**हिङ्गुनिर्यास**शब्दोऽयं निम्बे हिङ्गुरसेऽपि च ।
**हिरण्यरेतसौ** प्रोक्तौ दिवाकरहुताशनौ ॥

---

*2733* लगौकाः *for* नगौकाः; सरभे *for* शरभे.

*2734* सूर्य्ये *for* सूर्ये.

*2735* पुनर्वसु *for* पुनर्वसुः ; कात्यायणः *for* कात्यायनः.

*2736* विश्वासुः *for* विश्वावसुः ; स्यादेवानां *for* स्याद्देवानां; गापणेपि *for* गायनेऽपि.

*2738* रावनसिः *for* रावणासिः; कीर्त्तितः *for* कीर्तितः.

*2739* निन्दनेपि *for* निन्दनेऽपि.

*2740* अव° *for* अप°; °दंशयोः *for* °शब्दयोः.

*2741* स्याद्दंधः *for* स्यादन्धः.

*2742* °निर्य्यास° *fro* °निर्यास°; °शव्दोयं *for* °शब्दोऽयं; निम्वे *for* निम्बे; °रसेपि *for* °रसेऽपि.

|| सश्लोकः ||

वसवो देवभेदाः स्यू रश्मौ योक्त्रेऽनले वसुः ।
कुबेरे वकपुष्पे च वसु रत्नं धनं वसु ॥

रसः शृङ्गारादौ द्रवगरलरागेष्वपि रसो
रसस्तिक्तादौ च...तनुधात्वोरपि रसः ।
रसो वीर्ये सूते चपलजलस्वादेष्वपि रसा
[106] रसा पाठाशल्लक्यवनिरपि धीरैर्निगदिता ॥

हंसो लोभपराङ्मुखेऽवनिपतौ हंसो विहङ्गान्तरे
हंसौ विष्णुदिवाकरावपि हयश्रेष्ठौ च हंसौ स्मृतौ ।
हंसाः पर्वतमन्त्रयोगिमरुतां भेदास्तु तेऽपि स्मृता
हंसः स्यान्महिषे परात्मनि गुरौ ? पुंसां वरे पर्वते ॥

कंसः स्यात्तैजसे पात्रे पानभाजनमात्रके ।
कंसो दृष्टस्तु कविभिर्दैत्यमानप्रभेदयोः ॥

2745 स्यु *for* स्यू; योग्ये *for* योक्त्रे.
2746 कुवेरे *for* कुबेरे.
2749 वीर्य्ये *for* वीर्ये. चसित° *for* चपल°; °जन° *for* °जल°; °वानेषु *for* °स्वादेषु.
2752 हंसो *for* हंसौ; °दिवाकराचपि (*before corr.*) *for* °दिवाकरावपि
2753 °मंत्रि° *for* °मन्त्र°; तेपि *for* तेऽपि.
2754 स्यात्परमादिवेषहि परे *for* स्यान्महिषे परात्मनि गुरौ; स्वरे *for* वरे.
2756 कविभिर्द्दैत्य° *for* कविभिर्दैत्य°.

दासौ चेटककैवर्तौ शूद्रो दास उदाहृतः ।
दानपात्रे स्मृतो दासो दासी च झिण्टिका स्मृता ॥

तपश्चान्द्रायणादौ स्यात्तपाः शिशिरमाघयोः ।
तपो वै धर्मलोकश्च जनो लोकात्परस्तपः ।

नभाः स्याच्छ्रावणे मासि वर्षास्वथ नभोऽम्बरे ।
घ्राणे पलितशीर्षे च वयोमृणालसूत्रयोः ॥

श्रेयः स्यान्मङ्गले धर्मे प्रशस्तेऽतिशयादपि ।
श्रेयसी करिपिप्पल्यां रास्ना च श्रेयसी स्मृता ॥

रोदश्च रोदसी चापि दिवि भूमौ पृथक्पृथक् ।
सहप्रयोगेऽप्यनयो रोदश्च रोदसी तथा ॥

वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् ।
तेषामेव च विश्वासहेतोः प्रावरणं च सः ॥

---

2757 °कैवर्त्तौ *for* °कैवर्तौ.
2758 पान° *for* दान°. दासो *repeated.*
2759 तपः *for* तपाः.
2760 धर्म्म° *for* धर्म°.
2761 स्याछ्रावणे *for* स्याच्छ्रावणे; नभोंवरे *for* नभोऽम्बरे.
2762 °शृर्णल° *for* °मृणाल°.
2763 धर्म्मे *for* धर्मे.
2164 राष्ना *for* रास्ना.
2766 °प्रयोगेपि *for* °प्रयोगेऽपि.
2767 वंधने *for* बन्धने.

कुम्भीनसाः स्युस्ते सर्पा ये स्युर्दृष्टिविषोल्वणाः ।
रक्षसो नरकाख्यस्य माता कुम्भीनसी स्मृता ॥

॥ इति सान्तवर्गः ॥

॥ हपादः ॥

मोहो मूर्च्छाप्यविद्या च ग्राहो ग्रहावहारयोः ।
स्नेहस्तैलादिके प्रेम्णि वीहा स्यादुद्यमेहयोः ॥

वहो वाहे गवां स्कन्धे गृहा दारा गृ[107]हा गृहम् ।
वैदेही पिप्पली सीता वाराही च महौषधी ।
निरूहः स्नेहने तर्के कलहः कलियुद्धयोः॥

॥ हार्धश्लोकः ॥

बर्हं मयूरपुच्छेऽपि बर्हं पत्त्रकमिष्यते ।
अहिर्वृत्रासुरे सर्पेऽप्यतिक्रूरेऽप्यहिः स्मृतः ॥

---

2769 कुंभीनसास्त्युते *for* कुम्भीनसाः स्युस्ते; दष्टि° *for* दृष्टि°; °विषोल्वणाः *for* °विषोल्बणाः.

2771 सान्ताः समाप्ताः *for* इति सान्तवर्गः.

2773 मूर्छा *for* मूर्च्छा.

2774 स्नेह *for* स्नेहस्; प्रेम्नि *for* प्रेम्णि; स्याद्वृत्यं° *for* स्यादुद्य°.

2775 स्कन्दे *for* स्कन्धे.

2778 हार्द्धः *for* हार्धश्लोकः.

2779 वहं *for* बर्हं; °पूछेपि *for* °पुच्छेऽपि; वर्हं *for* बर्हं.

2780 वातासुरे *for* वृत्रासुरे; सर्पेपि *for* सर्पेऽपि; °क्रूरेपि *for* °क्रूरेऽपि.

प्रोहो नैपुणतर्के स्यात्प्रोहो गजाङ्घ्रिपर्वणि ।
व्यूहः स्याद्बलविन्यासे व्यूहस्तर्कसमूहयोः ॥

बहुशब्दस्तु विपुले त्र्यादिसंख्यास्वपि स्मृतः ।
लोहश्चागुरुसारः स्यादयः सर्वं च तैजसम् ॥

गुहा दरी पृश्निपर्णी कार्तिकेयो गुहो मतः ।
महो नदी मही भूमिर्महः उत्सवतेजसोः ॥

बाहा स्मृता भुजायां तु बाहो मानतुरंगयोः ।
कुहूः स्यात्कोकिलालापो नष्टकलाप्यमावसी ॥

संग्रहो बृहदुत्तुङ्गे मुष्टिसंक्षेपयोरपि ।
निग्रहो भर्त्सनाभिख्यो मर्यादां निग्रहं विदुः ॥

~~~~~~~~

2781 नैनैपुण° *for* नैपुण°.

2782 वल° *for* बल°.

2783 वहुशब्दः *for* बहुशब्दः.

2784 स्यात् अयः *for* स्यादयः.

2785 ग्राहा *for* गुहा; पुन्मिपर्णी *for* पृश्निपर्णी.

2786 उँत्सव° *for* उत्सव°.

2787 वाहा *for* बाहा; भुजायान्तु *for* भुजायां तु; वाहः *for* बाहो; यान° *for* मान°.

2788 कुहू *for* कुहूः; स्या *for* स्यात्; °लला *for* °कला; अमावास्या *for* अमावसी.

2789 वृद्धउँत्तुगे *for* बृहदुत्तुङ्गे.

2790 निग्रहोर् *for* निग्रहो; °भिख्योर् *for* °भिख्यो; निग्रहः *for* निग्रहं.
~~~~~~~~

विग्रहो विस्तरः प्रोक्तो विग्रहः काययुद्धयोः ।
आग्रहोऽनुग्रहो दृष्ट आसङ्गे ग्रहणेऽपि च ॥

प्रग्रहः स्यात्तुलासूत्रे हयरश्मौ च कीर्तितः ।
नवाहः स्यान्नवाहनि नवाहः प्रतिपत्तिथिः ॥

प्रवाहो जलवेगेऽपि पारम्पर्यानुवर्तने ।
वराहः शूकरे विष्णौ मानभेदेऽम्बुदे गिरौ ॥

आरोहो जवने दैर्घ्ये पादपाङ्गे निषादिनि ।
विदेहो मैथिले ख्यातो देहशून्ये च कीर्तितः ॥

निर्व्यूहः शेखरे द्वारे निर्व्यूहो नागदन्तकः ।
दात्यूहश्चातकः प्रोक्तो दात्यूहः कालकण्टकः ॥

अवरोहोऽवतरणे [*108*] पादपाङ्गे लतोद्भवे ।
परिबर्हस्तु [ राजार्हवस्तु ? ] न्यथ परिच्छदे ॥

---

*2791* विग्रह *for* विग्रहो ; काम° *for* काय°.
*2792* ग्रहणेपि *for* ग्रहणेऽपि.
*2793* कीत्तितः *for* कीर्तितः.
*2795* जनवेगेपि *for* जलवेगेऽपि; पारस्पर्यानुवर्त्तने *for* पारम्पर्यानुवर्तने.
*2796* वाराहः *for* वराहः; साम° *for* मान°; ग्रुदे *for*ऽम्बुदे.
*2797* पादपांगो *for* पादपाङ्गे; विनिंदिनि *for* निषादिनि.
*2798* नैखिले *for* मैथिले; कीर्त्तितः *for* कीर्तितः.
*2799* शेषरे *for* शेखरे.
*2801* अवरोहोवतरणे *for* अवरोहोऽवतरणे; नतो° *for* लतो°
*2802* परिवहस्तु *for* परिबर्हस्तु; परिछदे *for* परिच्छदे.

**परिवाहो** जलोच्छ्वासे नृपयोग्ये च वस्तुनि ।
**उपानहो** व्रणालेपपिण्डे वीणानिबन्धनें ॥

**गन्धवहः** स्मृतो वाते नासा **गन्धवहा** स्मृता ।
**पितमहाः** पितृपिता परमेष्ठी **पितामहः** ॥

**तमोपहो** दिवानाथनिशानाथकृशानुषु ।
**उपग्रहाख्यं** द्वितयं स्याद्बन्दिरनुकूलकम् ॥

**अवग्रहः** प्रतिबन्धे प्रतिबोधे गजालिके ।
**अवग्राहो**ऽपि वृष्टीनां बोधे हस्तिललाटके ॥

**अभिग्रहो**ऽभिग्रहणमभियोगोऽप्य**भिग्रहः** ।
**महासहा** मासपर्णी अम्लानश्च **महासहा** ॥

॥ हश्लोकः ॥

**सहः** शक्तौ क्षमायुक्ते तुल्यार्थे तु **सहाव्ययम्** ।
**सहा** भूः सहदेवा स्यादर्यमाख्यौषधिस्तथा ॥

---

2803 परीहारः *for* परीवाहः; जनो° *for* जलो°.

2804 उपलाहः *for* उपनाहः; मृणालेपपिंड *for* व्रणालेपपिण्डे; ° निवंधने *for* ° निबन्धने.

2805 बंधवहा *for* गन्धवहा.

2807 °निनाथ° *for* °निशानाथ°.

2808 द्वितीयं *for* द्वितयं; स्यान्नन्दिः *for* स्याद्बन्दिः

2809 प्रतिवंधे *for* प्रतिबन्धे; गजानिके *for* गजालिके.

2810 अवग्रहोपि *for* अवग्राहोऽपि; °लालाटके *for* °ललाटके.

2811 अभिग्रहोभि° *for* अभिग्रहोऽभि°; अभियोगोपि *for* अभियोगोऽपि; अतिग्रहः *for* अभिग्रहः.

2812 मातप्रर्णी *for* मासपर्णी; आम्लानः *for* अम्लानः.

2815 स्या *for* स्याद्.

सिंहो राशिविशेषः स्यान्मृगेन्द्रः सिंह इष्यते ।
कण्टकारी च वार्त्ताकी सिंही राहोरपि प्रसूः ॥

कटाहो घृततैलादिपाकभाण्डे प्रकीर्तितः ।
जायमानविषाणश्च कटाहो महिषीशिशुः ॥

प्रग्रहस्तु तुलासूत्रे वहुवादिमतेऽपि च ? । 2820
भासि योक्त्रे च वृक्षे च सुवर्णहलिसाह्वे ॥

परिग्रहः परिजने शपथे च परिग्रहः ।
परिग्रहः कलत्रेऽपि मूलस्वीकारयोरपि ॥

प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे ।
द्विजेभ्यो विधिवद्देये तद्ग्रहे च प्रकीर्तितः ॥ 2825

॥ [ इति हान्तवर्गः ] ॥

॥ क्षपादः ॥

वीक्षं स्याद्विस्मये दृश्ये न्यक्षं कात्स्न्र्यनिकृ[109]ष्टयोः ।
यक्षौ गुह्यकयक्षेशौ चोक्षौ तीक्ष्णमनोहरौ ॥

---

*2816* ईष्यते *for* इष्यते.

*2818* ॰पाकभाडे *for* ॰पाकभाण्डे; प्रकीर्त्तितः *for* प्रकीर्तितः.

*2819* महिषीशिशौ *for* महिषीशिशुः.

*2821* कोक्ते *for* योक्त्रे; सुवर्णे च निशाह्वये *for* सुवर्णहलिसाह्वये.

*2823* कलत्रेपि *for* कलत्रेऽपि.

*2824* च तद्ग्रहे *for* पतद्ग्रहे.

*2825* द्विजिह्वो *for* द्विजेभ्यो; प्रकीर्त्तितः *for* प्रकीर्तितः.

*2826* *Add* इति हान्तवर्गः

*2828* क्षीरं *for* वीक्षं; विश्मये *for* विस्मये; स्वक्ष *for* न्यक्षं.

॥ क्षार्धश्लोकः ॥

लक्षं छद्मनि विख्यातं लक्षं संख्याशरव्ययोः ।
ऋक्षाणि तारका ऋक्षो भल्लुकाद्रिप्रभेदयोः ॥

मोक्षौ मोचननिर्वाणौ मोक्षो घण्टाख्यपाटलिः ।
रूक्षो वृक्षप्रभेदः स्याद्रूक्षोऽप्रेमण्यचिक्कणे ॥

ध्वाङ्क्षौ काकबकौ ख्यातौ ध्वाङ्क्षस्तर्ककभिक्षुकाः ।
भिक्षा याच्ञा भृतिः सेवा भिक्षा भिक्षणवस्तु च ॥

प्रेक्षा नृत्येक्षणं बुद्धिः प्रेक्षो न्यायानुसारकः ।
अध्यक्षं विदुराचार्याः प्रत्यक्षेऽधिकृतेऽपि च ।
गवाक्षः कपिभेदे स्याद्गोदुह्यायां च जालके ॥

॥ क्षश्लोकः ॥

पक्षः साध्ये विरोधे च चुल्यां केशात्परस्तु यः ।
बलकालपतत्रेषु सहायपरिपार्श्वयोः ॥



2830 क्षार्द्धः *for* क्षार्धश्लोकः.

2831 लक्षः *for* लक्षं; पद्मनि *for* छद्मनि.

2832 तारकान् *for* तारका; °अद्रिपभेदयोः *for* °अद्रिप्रभेदयोः.

2834 रुक्षौप्रेम्नचिक्कणे *for* रूक्षोऽप्रेमण्यचिक्कणे.

2835 ° वक *for* ° बकौ.

2836 याचना *for* याच्ञा; भिक्षन° *for* भिक्षण°.

2837 वुद्धिः *for* बुद्धिः; प्रेक्षा *for* प्रेक्षो.

2838 प्रत्यक्षेधिकृतेपि *for* प्रत्यक्षेऽधिकृतेऽपि.

2839 स्यात् *for* स्याद्; कालके *for* जालके.

2841 क्षपः ( *before corr.* ) *for* पक्षः.

2842 वाल° *for* बल° .

कक्षः स्मृतो भुजामूले कक्षो मूले च वीरुधः।
कक्ष स्पर्धापदे काञ्च्यां रथगेहप्रभेदयोः।
गजरज्जौ परीधाने पश्चादञ्चलपच्छत्रे ॥

प्लक्षः पिप्पलपर्कटयोर्गर्दभाण्डे तरावपि।
प्लक्षो वीतियके द्वीपे द्वारपार्श्वे गृहस्य च ॥

दक्षः स्याच्चतुरे वह्नौ ताम्रचूडे प्रजापतौ।
दक्षः स्यात्पुंगवे स्थाणोर्दक्षो वामतरेऽपि च ॥

अक्षान्वदन्ति शकटव्यवहारकर्षा-
न्सौवर्चलामरकपाशकहस्तिपक्षान्।
अक्षो रथावयववाक् च बिभीतके स्या-
दक्षाणि पण्डितजना विदुरिन्द्रियाणि ॥

॥ इति क्षान्तवर्गः ॥

---

2843 भुजामूल *for* भुजामूले.
2844 स्पर्द्धा° *for* स्पर्धा;°
2845 गजरत्नौ *for* गजरज्जौ.
2846 °कर्कटयोः *for* °पर्कटयोः; गद्धभश्वे *for* गर्दभाण्डे.
2847 प्लक्षौ *for* प्लक्षो.
2848 अस्तचूडे *for* ताम्रचूडे.
2849 स्या *for* स्यात्; स्थानो *for* स्थाणोर्; वालतरेपि *for* वामतरेऽपि.
2850 अक्षान (*before corr.*) *for* अक्षान्; सकटस्य (*before corr.*) *for* शकट°; °वहावकर्षान (*before corr.*) *for* °व्यवहारकर्षान्.
2851 सौवर्चलामक° (*before corrr*) *for* सौवर्चलामरक°
2852 °वाकच (*before corr.*), °वाकचे (*after corr.*) *for* °वाक् च; विभीतके *for* बिभीतके.
2854 क्षान्ताः समाप्ताः *for* इति क्षान्तवर्गः.

## ॥ [ अव्ययवर्गः ] ॥

[ 110 ] अथेदानीमव्ययानां पूर्ववत्संग्रहः क्रमात् ।
अकारादिक्रमस्तस्मिन्नधिकः पूर्वतो भवेत् ॥

### ॥ अकाराद्यर्धश्लोकः ॥

अ स्वल्पार्थेऽप्यभावे च विष्णावीशे त्वनव्ययम् ।
आङितीषदभिव्याप्तिसीमार्थे धातुयोगजे ॥

आ प्रगृह्यं स्मृतौ वाक्येऽनुकम्पायां समुच्चये ।
ई रुषोक्तावखेदे च कामदेवे त्वनव्ययम् ॥

ऋ कथितोऽदितौ स्वर्गे तद्वद् लृद्वयमिष्यते ।
एऐशब्दौ तु हेहैवदाह्वानामन्त्रणौ स्मृतौ ॥

ओऔशब्दौ तु होहौवत्संबुद्ध्याह्वानयोः स्मृतौ ।
निपातानामसत्वादि प्रायेणार्थाः प्रकीर्तिताः ।
येचित्केचित्क्वचिद्ग्रन्थे मया प्राप्ताः प्रकीर्तिताः ॥

---

2857 अकाराद्यर्द्धः *for* अकाराद्यर्धश्लोकः .

2858 स्वप्नार्थे *for* स्वल्पार्थे; प्रभावे *for* अप्यभावे; विष्णावस *for* विष्णा-वीशे; हमव्ययं *for* त्वनव्ययं.

2859 °सीमर्थे *for* °सीमार्थे.

2861 रूषोक्ता° *for* रुषोक्ता°.

2862 स्वः *for* ऋ; कथितोदितौ *for* कथितोऽदितौ; तलद्वयमीष्यते *for* तद्वद् लृद्वयमिष्यते.

2863 °शद्वौ *for* °शब्दौ.

2864 °शद्वौ *for* °शब्दौ; °वा *for* °वत् ; संवुद्धि° *for* संबुद्धि° .

2865 प्रकीर्त्तिताः *for* प्रकीर्तिताः.

2866 येचि *for* येचित् ; प्रकीर्त्तिताः *for* प्रकीर्तिताः.

॥ [ कपादः ] ॥

धिङ् निर्भर्त्सनं निन्दा [ च ] मनाक् स्यात्स्तोकमन्दयोः ।

॥ गार्धश्लोकः ॥

अङ्ग संबोधने हर्षे पुनरर्थेऽङ्ग कीर्तितम् ॥ 2870

॥ चपादः ॥

ननु च प्रश्ने विरोधोक्तौ सम्यग्बाढप्रशंसयोः ।

॥ चार्धश्लोकः ॥

तिर्यक् तिरोऽर्थे वक्रे च विहगादौ त्वनव्ययम् ॥

॥ [ ठार्धश्लोकः ] ॥ 2875

अपष्ठु निरवद्यं स्यादपष्ठु शोभनं स्मृतम् ।

॥ णार्धश्लोकः ॥

अन्तरेणपदं विद्याद्विनामध्यार्थवाचकम् ॥

---

2867 *Add* कपादः .

2868 *Add* च *after* निन्दा.

2869 कार्द्धः *for* कार्धश्लोकः.

2870 संवोधने *for* संबोधने; पुनरार्थे *for* पुनरर्थे; कीर्त्तितं *for* कीर्तितं.

2872 ननु *for* ननु च; वाच॰ *for* बाढ॰.

2873 चार्द्धः *for* चार्धश्लोकः.

2874 तिर्यक *for* तिर्यक्; विरोर्थे *for* तिरोऽर्थे; विहागादौ *for* विहगादौ.

2875 *Add* ठार्धश्लोकः .

2876 निरव्ययं ( *before corr.* ) *for* निरवद्यं.

॥ तपादः ॥

स्वित्प्रश्ने च वितर्के स्यादाराद्दूरसमीपयोः ।
सकृत्सहैकवारे स्यात्साक्षात्प्रत्यक्षतुल्ययोः ॥

स्वस्त्याशीःक्षेमपुण्यादौ शश्वत्पुनःसदार्थयोः ।
किमुतातिशये प्रश्ने यद्वत्प्रश्नवितर्कयोः ॥

॥ तार्धश्लोकः ॥

तु पादपूरणे भेदे समुच्चयेऽवधारणे ।
अस्तु स्यादभ्यनुज्ञाने ईर्ष्यापी[ 111 ]डार्थयोरपि ॥
हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ।
बत मन्त्रणसंतोषखेदानुक्रोशविस्मये ॥
उत्प्रश्ने च वितर्के स्यादुताप्यर्थविकल्पयोः ।
पश्चादनन्तरार्थे स्यात्प्रतीच्यां चरमेऽपि च ॥

---

2880 आरादूर° *for* आराद्दूर° .

2882 शश्वत *for* शश्वत्.

2883 यद्व *for* यद्वत्.

2884 तार्द्धः *for* तार्धश्लोकः .

2886 तास्तु *for* अस्तु.

2887 हर्षेनुकंपायां *for* हर्षेऽनुकम्पायां.

2888 वत *for* बत.

2889 तत् *for* उत् ; स्यात् *repeated*; उताप्य° *for* उताप्यर्थ° .

2890 अमन्तरार्थे *for* अनन्तरार्थे; प्रतीव्याच्चरमेपि *for* प्रतीच्यां चरमेऽपि.

यावत्तावत्परिच्छेदे कार्त्स्न्ये मानेऽवधारणे ।
पुरस्ताच्चतुर्षु प्राच्यां पुरार्थे प्रथमेऽग्रतः ॥

॥ तश्लोकः ॥

**प्रति** प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।
मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु **प्रति** ॥

**अति**शब्दः प्रशंसायां प्रकर्षे लङ्घनेऽप्य**ति** ।
नितान्तासंप्रतिक्षेपवाक्येऽप्येष सुसंमतः ॥

**इति** हेतुप्रकरणप्रकाशादिसमाप्तिषु ।
निदर्शने प्रकारे चानुकर्षे च प्रकीर्तितः ॥
॥ थार्धश्लोकः ॥

**वृथा** निष्कारणे वन्ध्ये **वृथा** स्याद्विधिवर्जिते ।
**यथा**शब्दस्तु सादृश्ये **यथा**नतिक्रमादिषु ॥

~~~~~~~~

*2891* परिछेदे *for* परिच्छेदे; कार्त्स्ने *for* कार्त्स्न्ये; मानेवधारणे *for* मानेऽवधारणे.

*2892* प्रथमेग्रतः *for* प्रथमेऽग्रतः.

*2894* पतिनिधौ *for* प्रतिनिधौ.

*2896* °शव्दः *for* °शब्दः; प्रसंसायां *for* प्रशंसायां; लंघनेपि *for* लङ्घनेऽपि.

*2897* नितान्तसंप्रति° *for* नितान्तासंप्रति°; °वाक्येपि *for* °वाक्येऽपि.

*2998* ईति *for* इति.

*2899* प्रकीर्त्तितः *for* प्रकीर्तितः.

*2900* थार्द्धः *for* थार्धश्लोकः.

*2901* वक्षे *for* वन्ध्ये; °वर्जितेः *for* °वर्जिते.

*2902* °शव्दः *for* °शब्दः; अप्यथा *for* यथा.
~~~~~~~~

॥ थश्लोकः ॥

**अथो अथ** च संप्रश्ने आरम्भे मङ्गलेऽपि च ।
कार्त्स्न्येऽप्यनन्तरे चैव संशयेऽपि प्रकीर्तितः ॥

॥ दपादः ॥

**यदेताव**धिगत्यर्थे **तत्**कारणतदात्वयोः ।

॥ धार्धश्लोकः ॥

**अधीश्वरे** चाधिकारे तथाधीनविकारयोः ॥

॥ नार्धश्लोकः ॥

**नु** वितर्केऽप्यनुनये प्रश्नातीतार्थयोश्च **नु** ।
**न** निषेधे इवात्यर्थे स्यादतीतेऽनुनयेऽपि च ॥

**ननु** प्रश्नेऽप्यनुनये चानुज्ञानेऽवधारणे ।
**नाना** तु वर्जने प्रोक्तं **नाना**नेकोभयार्थयोः॥

---

2904 मंगलेपि *for* मङ्गलेऽपि.

2905 कार्स्नेपि *for* कार्त्स्न्येऽपि; शंसयेपि *for* संशयेऽपि; प्रकीर्त्तितः *for* प्रकीर्तितः.

2907 यदेताधिगत्यर्थे *for* यदेतावधिगत्यर्थे; °तदर्थयोः *for* °तदात्वयोः.

2908 धार्द्धः *for* धार्धश्लोकः.

2910 नार्द्धः *for* नार्धश्लोकः.

2911 वितर्केपि *for* वितर्केऽपि; अनुलये *for* अनुनये.

2912 निवेशे *for* निषेधे; ईव *for* इव; अनुनयेपि *for* अनुनयेऽपि.

2913 प्रश्नेपि *for* प्रश्नेऽपि; अनुज्ञानेव° *for* अनुज्ञानेऽव°.

॥ नश्लोकः ॥

अनु हीने सहार्थे च पश्चात्सादृश्ययोरनु ।
लक्षणादौ समीपेऽनु आया[112]मेऽनुक्रमेऽप्यनु ॥

॥ पार्धश्लोकः ॥

अप स्यादपकृष्टार्थो वर्जनार्थोऽप्यप स्मृतः ।
उप समीपवाची स्यादुप हीनेऽधिकेऽप्युप ॥

॥ पश्लोकः ॥

अपि संभावनाप्रश्नशङ्कागर्हासमुच्चये ।
अपि युक्तपदार्थे च कामचारक्रियासु च ॥

॥ बार्धश्लोकः ॥

वशब्द उपमाने स्याद्वरुणे च त्वनव्ययम् ।
वा समुच्चयोपमयोर्वा विकल्पेऽवधारणे ॥

---

2917 समीपेनु *for* समीपेऽनु; आयासेनुत्तमेप्यनु *for* आयामेऽनुक्रमेऽप्यनु.

2918 पार्द्धः *for* पार्धश्लोकः

2919 वर्जनार्थोपि *for* वर्जनार्थोऽपि.

2920 अविकेप्यपः *for* अधिकेऽप्युप.

2923 अप्रयुक्त° *for* अपि युक्त°; कामचारा° *for* कामचार°.

2924 वार्द्धः (*before corr.*), बार्द्धः (*after corr.*) *for* बार्धश्लोकः.

2925 उपमाणे *for* उपमाने; स्यादारुणे *for* स्याद्वरुणे.

वि श्रेष्ठातीतनानार्थो बिः स्यात्पक्षी त्वनव्ययम् ।
वै स्यात्संबोधने पादपूरणेऽनुनयेऽपि च ॥

॥ मार्धश्लोकः ॥

अभीत्थंभूतकथने वीप्साभिमुख्ययोरपि ।

॥ मपादः ॥

स्म पादपूरणेऽतीते उं प्रश्नेऽङ्गीकृतौ रुषि ॥

हुं वितर्के परिप्रश्ने किंशब्दः प्रश्नतर्कयोः ।
कामं प्रकामेऽनुमतौ प्राध्वं नर्मानुकूलयोः ॥

॥ मार्धश्लोकः ॥

ओमित्यनुमतौ प्रोक्तं परमे चाप्यनुक्रमे ।
सं सङ्गार्थः प्रकृष्टार्थो आरम्भः शोभनार्थकः ॥

अलं भूषणपर्याप्तिवारणेषु स्मृत[ मलम् ] ।
एवं प्रकारोपमयोरङ्गीकारेऽवधारणे ॥

---

2927 वी *for* विः.

2928 संवोधने *for* संबोधने; अनुनयेपि *for* अनुनयेऽपि.

2929 मार्द्धः *for* मार्धश्लोकः.

2930 °लक्षणे *for* °कथने.

2932 म *for* स्म; याद° *for* पाद°; उँः *for* उं; प्रश्नेऽगीकृतौ *for* प्रश्नेऽङ्गीकृतौ.

2933 किंशव्दः *for* किंशब्दः.

2934 प्रकामेनु° *for* प्रकामेऽनु°; नर्म्म° *for* नर्म°.

2935 मार्द्धः *for* मार्धश्लोकः.

2936 चाप्यंनुक्रमे *for* चाप्यनुक्रमे.

2937 सगीर्थः *for* सङ्गार्थः; प्रकृष्टार्थः *for* प्रकृष्टार्थो.

2938 भूपण° *for* भूषण°; *add* अलं *after* स्मृतं.

जोषं सुखे प्रशंसायां तूष्णींलङ्घनयोरपि ।
साम्प्रतं तु द्वयोरेव [ स्याद्यु ] क्तार्थाधुनार्थयोः ॥

॥ मश्लोकः ॥

अभीक्ष्णमनिशं प्रोक्तमभीक्ष्णं स्या...... ।
पौनःपौन्यमभीक्ष्णं [ स्यादभीक्ष्णं ] च भृशार्थकम् ॥

तूष्णीकं तु स्मृतं मौने मौनशीलं त्वनव्ययम् ।
.......................................... ॥

॥ रपादः ॥

[ प्र ] प्रकर्षे गताद्यर्थे स्वः स्वर्गपरलोकयोः ।
दुः कष्टे तु निषेधे [च] पुनरप्रथमभेदयोः ॥

॥ रार्धश्लोकः ॥

निर्निश्चये[ *113* ]क्रान्ताद्यर्थे निर्निःशेषनिषेधयोः ।
परि स्यात्सर्वतोभावे वर्जने लक्षणादिषु ॥

---

*2940* प्रशंशायां *for* प्रशंसायां; तूष्णी॰ तूर्ष्णीं॰.
*2943* अनिसं *for* अनिशं.
*2945* तूष्णीकन्तु *for* तूष्णीकं तु; मौनेशील *for* मौनशीलं.
*2947* तपादः *for* रपादः.
*2948* *omit* च. *after* प्रकर्षे.
*2949* न्व कष्टे तु निषे च *for* दुः कष्टे तु निषेधे च.
*2950* रार्द्धः *for* रार्धश्लोकः.
*2951* णिश्चये *for* निश्चये; णिःशेष॰ *for* निःशेष॰.
*2952* वर्नने *for* वर्जने.

पुरात्यर्थे पुराणे च प्रबन्धातीतभाविषु ।
उर्र्युरुरी चोरी च विस्तारेऽङ्गीकृतौ त्रयम् ॥

अन्तर्मध्ये तथा प्रान्ते स्वीकारे च प्रयुज्यते ।
प्रादुः स्यात्प्रकटीभावः प्रादुः सत्तार्थवाचकः ॥

॥ लार्धश्लोकः ॥

किलशब्दस्तु वार्तायां संभाव्येऽनुनयेऽरुचौ ।

॥ लश्लोकः ॥

खलु स्याद्वाक्यभूषायां जिज्ञासादौ निषेधने ।
खलु माने च वीप्सायां खलु चानुनये स्मृतः ॥

॥ वपादः ॥

दिवाह्नि प्रभाते स्यादेवौपम्येऽवधारणे ।

॥ षार्धश्लोकः ॥

उषा रात्रौ तदन्ते स्यादत्रानव्ययमप्युषा ॥

---

2953 पुरंध॰ *for* प्रबन्ध॰.

2954 उरीरी *for* उरुरी; चोररी *for* चोरी.

2955 अन्तर्म्मध्ये *for* अन्तर्मध्ये; प्राप्ते *for* प्रान्ते.

2956 स्यात *for* स्यात्; सत्तात्म॰ *for* सत्तार्थ॰.

2957 लार्द्धः *for* लार्धश्लोकः.

2958 ॰शब्दः *for* ॰शब्दः; वार्त्तायां *for* वार्तायां; अनुनयेरुचौ *for* अनु-नयेऽरुचौ.

2960 खलुः *for* खलु.

2961 खनु *for* खलु.

2963 स्यादेवोपम्येव॰ *for* स्यादेवौपम्येऽव॰.

2964 षार्द्धः *for* षार्धश्लोकः.

दोषा रात्रिमुखे रात्रौ स्यादनव्ययमप्यसौ ।
निकषा निकटे ख्यातो रक्षोमातर्यनव्ययम् ॥

॥ षश्लोकः ॥

विभाषा स्याद्विकल्पार्थः क्वचित्समुच्चयार्थकः ।
अनव्ययाव्ययं सद्भिरव्ययं च प्रकीर्तितम् ॥ 2970

॥ सपादः ॥

सु पूजायां तथाधिक्ये आस्तु स्यात्कोपपीडयोः ।
[शनैः] शनैश्चरे स्वैरे नीचैः स्वैराल्पयोः स्मृतम् ॥

तिरोऽन्तर्धौ तिर्यगर्थे मिथोऽन्योन्यं मिथो [रहः] ।
पुरोऽग्रेऽपि प्रथमे स्यादञ्जसा तत्त्वशीघ्रयोः ॥ 2975

॥ सार्धश्लोकः ॥

निर्निश्चये निषेधे च साकल्यातीतयोरपि ।
मुहुः पुनः [पुनः] ख्यातः प्रकृतेऽर्थे त्वनव्ययम् ।

---

*2967* निषका *for* निकषा.
*2968* वश्लोकः *for* षश्लोकः.
*2970* प्रकीर्त्तितं *for* प्रकीर्तितं.
*2972* स्व *for* सु; स्यास्तु *for* आस्तु.
*2973* *Add* शनैः *before* शनैश्चरे; स्वेर° *for* स्वैर°.
*2974* तीरोऽन्तर्द्धौ *for* तिरोऽन्तर्धौ; तिर्यगार्थे *for* तिर्यगर्थे.
*2975* पुरे अग्रेपि *for* पुरोऽग्रेऽपि; तनु° *for* तत्त्व°.
*2976* सार्द्धः *for* सार्धश्लोकः.
*2977* णिश्चये *for* निश्चये; न्तिषेधे *for* निषेधे.
*2978* *Add* पुनः *after* पुनः; प्रकृतेर्थे *for* प्रकृतेऽर्थे.

पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरः ।
अभितः कात्स्न्योंभयाग्रेषु शीघ्रसांनिध्ययोरपि ॥

॥ हपादः ॥

हंहो संबोधने प्र[114]श्नेऽहहेत्यद्भुतखेदयोः ।
अह क्षेपे नियोगे स्यादहो प्रश्ननियोगयोः ॥

॥ [ हार्धश्लोकः ] ॥

ह स्यात्संबोधने पादपूरणेऽनव्ययं शिवे ।
हा शोके[ च ]विषादे च दुःखार्थे च स्मृतो बुधैः ॥

हि हेतौ स्याद्विशेषार्थे एकार्थे पूरणेऽपि च ।
ही विषादे विस्मये स्याद्दुःखहेत्वोरपि स्मृतः ॥

हाहा खेदे हुहु हर्षे गन्धर्वार्थेऽमू त्वनव्ययम् ।
हे है व्यस्तौ समस्तौ च हूतौ संबोधने स्मृतौ ॥

---

2979 पूर्ववत्सरः ( *before corr.* ) *for* पूर्ववासरः.
2980 शिघ्र° *for* शीघ्र°.
2982 संवोधने *for* संबोधने; हंहावद्भूत° *for* अहहेत्यद्भुत°.
2983 अहः *for* अह; आतु *for* अहो.
2984 *Add* हार्धश्लोकः.
2985 संवोधने *for* संबोधने; °पूरणे त्वनयं *for* °पूरणेऽनव्ययं.
2986 दुःस्वार्थे *for* दुःखार्थे; बुधैः *for* बुधैः.
2987 पूरणेपि *for* पूरणेऽपि.
2988 वीषादे *for* विषादे; दुःखहेतोः *for* दुःखहेत्वोः.
2989 खे ( *before corr.* ) *for* खेदे.
2990 हे हौ *for* हे ह; व्यात्पो *for* व्यस्वौ; कृतौ *for* हूतौ;
संवोधने *for* संबोधने.

हो हौ चैवंविधौ ज्ञेयौ हूतौ संबोधने तथा ।

॥ [ हश्लोकः ] ॥

सह साकल्यसादृश्ययौगपद्यसमृद्धिषु ॥

विद्यमाने च संबन्धे सहशब्दः प्रकीर्तितः ।

॥ क्षपादः ॥

मङ्क्षु शीघ्रे भृशार्थे च मङ्क्षु चाद्भुतखेदयोः ॥

[ ॥ इत्यव्ययवर्गः ॥ ]

॥ इत्यनेकसारोऽयं समाप्तः ॥

पूर्वाचार्याभिधानेभ्यः सारमाकृष्य यत्नतः ।

कृतो धरणिदासेन वर्णानुक्रमसंग्रहः ॥

खलवचनरजोभिर्दूषणाशासमीर–

द्रुततरपरिनुन्नैः संगमेनाविलानि ।

परकृतिसलिलानि स्वच्छयन्तो नितान्तं

कतकफलसमानाः सज्जनास्ते जयन्ति ॥

॥ इति धरणिकोषः समाप्तः ॥

॥ श्रीशुभं भूयात् ॥

---

*2991* हो हौ *for* हो हौ; कूते *for* हूतौ; संवोधने *for* संबोधने.

*2992* *Add* हश्लोकः.

*2993* साकल्प° *for* साकल्य°; °सादृश्ये *for* °सादृश्य°.

*2994* संयुद्धे *for* संबन्धे; °शव्दः *for* °शब्दः; प्रकीर्त्तितः *for* प्रकीर्तितः.

*2896* अद्भूत° *for* अद्भुत°.

*2897* *Add* इत्यव्ययवर्गः.

*2898* °सारोयं *for* °सारोऽयं; समाप्ताः *for* समाप्तः.

*2899* यन्ततः *for* यत्नतः.

*3001* रजोभि *for* रजोभिर्. दूषणी भासराभिर्° *for* दूषणाशासमीर°.

*3002* द्रुततवपरिनूनौ *for* द्रुततरपरिनुन्नैः; संगदोना° *for* संगमेना°.

*3003* परिकृति° *for* परकृति°; स्वच्छपात्तां यतान्तं *for* स्वच्छयन्तो नितान्तं.

*3004* कृसक° *for* कतक°.

*3005* ईति *for* इति.

---

DECCAN COLLEGE

## BUILDING CENTENARY AND SILVER JUBILEE MONOGRAPHS

Stone Age Tools; their techniques, names and probable function by H. D. Sankalia .. BC 81

The Faunal Remains from the Microlithic Site of Langhnaj (Gujarat) by Juliet Clutton-Brock .. BC 107

Ancient Human Skeletons from Langhnaj (Gujarat) by Sophia Erhadt .. BC 108

Word Hunting in Seven Continents by S. M. Katre .. BC 82

Kharia Phonology by H. S. Biligiri .. BC 83

Morphology of Verb and Noun in Spoken Sinhalese by D. N. Shankara Bhat .. BC 84

Marathi Dialect Texts I : Dialect of Cochin by A. M. Ghatage .. BC 94

Historical Phonology of Russian by Gordon H. Fairbanks .. BC 95

Descriptive Analysis of Tulu by D. N. Shankara Bhat .. BC 96

A Bonda Dictionary by Sudhibushan Bhattacharya .. BC 98

Nepali Transformational Structure : A Sketch by Franklin C. Southworth .. BC 100

A History of the Tamil Language by T. P. Meenakshisundaran .. BC 102

Nirukta Notes : Series I by M. A. Mehendale .. BC 104

Sphotasiddhi of Mandanamisra : Text and English Translation by K. A. Subramania Iyer .. BC 105

Vakyapadiya with Vrtti : English Translation with critical notes, Kanda I by K. A. Subramania Iyer .. BC 106

Sugamanvaya Vrtti of Sumativijayagani - I : Introduction and Text, edited by W. H. Maurer .. BC 85
II : Critical Notes .. BC 86

Paramanandiyanamamala edited by E. D. Kulkarni, Vols. I & II .. BC 87–88

Dharani Kosa of Dharanidhara edited by E. D. Kulkarni, Vols. I, II, & III. .. BC 89–91

Paryayasabdaratna of Dhananjaya, edited by E. D. Kulkarni and M. C. Dikshit, Vols. I & II. .. BC 92–93

Prakrit Languages and their Contribution to Indian Culture by S. M. Katre .. BC 97